मुनिश्रीमोहनलालजीजैनग्रंथमालाग्रथांक १

अर्हम्

॥ श्रीमज्जिनपतिसूरिशिष्यपूर्णभद्रगणिविरचितम् ॥

# ॥ धन्यशालिभद्र महाकाव्यम् ॥

श्रीमन्मुनिवर्य्ये मोहनलालजीमहाराजस्य प्रशिष्य मुनिवर्य्य कल्याणमुनि पंन्यासजीमहाराज हीरमुन्योः
सद्उपदेशेन भिन्न भिन्न गृहस्थानां द्रव्यसाहाय्येन जैनभास्करोदयमुद्रणालये मुद्राप्य प्रसिद्धिं नीतम्

वीर संवत् २४६० प्रति ५००

आ ग्रंथ छपाववामां नीचेना गृहस्थोए नीचे प्रमाणे रकम आपी छे.

५१) सांडेराव निवासी शेठ कीसनाजी भेराजी हस्ते शा० जेठाजी चुनीलाल

२५) वावागामनिवासी शेठ शरदारमलजी वर्धाजी

२५) मेता निवासी शेठ मंगळजी जेठाराम हा० पोपटलाल

२०) गढ़ निवासी बाइ धुरीबाइ

२५) साध्वीजी हेतश्रीजीना उपदेशथी चांदराइ निवासी बाइ समुबाइ

३०) साध्वीजी पुनश्रीजीना उपदेशथी शेठ भीखाजी खोजाजी हा० चेनीबाइ

२०) साध्वीजी हेतश्रीजीनी उपदेशथी कपुरचंदजी पनाजी तखतगढवाला

१०) शा. नेमचंद कुंवरजी पालीताणा

२५) शा. परभुदास भाइचंद हस्ते पोपटलाल सीहोरवाला

२५) वलाखीदास हाथीभाइ प्रांतीजवाला

२५६)

उपरोक्त गृहस्थो तथा व्हेनोए पोताना उदार दीलथी आ पुस्तकमां जे सहाय आपी ज्ञाननी सेवा करी छे, अने आवा अप्रसिद्ध ग्रंथने प्रकाशमां लाववानुं सद्भाग्य पण प्राप्त कर्युं छे. हवे पछी पण आ ग्रंथमाळा तरफथी बीजा ग्रंथो छपाशे तेमां पण उदारताथी पोतानी लक्ष्मीनो भोग आपी ज्ञान सेवा करी पोताना आत्मानुं कल्याण करवा भाग्यशाळी थशे. एवी आशा राखी विरमुं छुं.

ली. पंन्यास हीरमुनिजी

|| अर्हम् ||

श्रीमज्जिनपतिसूरिशिष्य पूर्णभद्रगणिविरचितम्

# || धन्यशालिभद्र—माहाकाव्यम् ||

ॐ नमः सर्वज्ञाय। श्रीनाभिनन्दनो भास्वान्, सत्पथ प्रथयत्वसौ। गोभि॑र्विश्वकारार्थान् यः। सचक्रा॑भिनन्दनः॥१॥

हरिं॓ यः प्रीणयामास, मधुरैर्वचनामृतैः। श्रीमान् पार्श्वजिनो नेमि—वीरः स भवतोवऽतात् ॥ २ ॥

मनोरमपदन्यासा, सदङ्गरुचिरा सदा। नन्द्याद्गी॔र्विशदश्लोका, जिनमूर्त्तिरिवामला ॥ ३ ॥

वाग्मिग्रामशिरोरत्नं, वन्द्यमर्त्येश्वरस्तुतम्। भक्त्या सुमेधसां धुर्यं श्रीमज्जिनपतिं गुरुम् ॥ ४ ॥

इति स्तुत्यस्तुतिक्षुण्ण—प्रत्यूहव्यूहसम्भवः। ग्रथयामि कथापीठं, सूत्रधार इवादितः ॥ ५ ॥

मानुष्यं प्राप्य दुःप्रापं, भ्रष्टं रत्नमिवाम्बुधौ धर्म एव विधातव्यो, नरैः स्वहितकामिभिः ॥ ६ ॥

दानशील तपोभाव—भेदैः, स च चतुर्विधः। कथितस्तीर्थनाथाद्यै—र्निःश्रेयससुखप्रदः ॥ ७ ॥

तत्र शीलं सुदुःपालं, गृहिभिर्गृहसंस्थितैः। बाह्यमाभ्यन्तरं चैव, तपोऽप्यत्यन्तदुश्चरम् ॥ ८ ॥

---

१ प्रभुपक्षे वाणिभिः, सूर्यपक्षे च किरणैः २ सज्जना एव चक्रवाकास्तान् अभिनन्दयतीत्येव शीलः ३ फणीन्द्रम् पार्श्वः, कृष्ण नेमिः, शक्रेन्द्रं। वीरः प्रीणयामासेत्यन्वयः ४ सरस्वती देवी. ५ वक्तृसमूहमुकुटम्. ६ पूज्यस्तवेन नाशितो विघ्नसमूहस्य संभवो येन सः

कुटुम्बचिन्तनव्यग्र–मानसानां निरन्तरम् । सदारम्भप्रवृत्तानां, भावनापि सुदुर्लभा ॥ ९ ॥
तस्माद्दानं गृहस्थाना—मुचितं रुचितं हितं । भवसर्वङ्कषं हेतु–र्मर्त्यामर्त्याऽमृतश्रियः ॥ १० ॥
धन्यश्च शालिभद्रश्च, कृतपुण्यादयो नराः । साधुदानप्रभावेण, वभूवुः सुखभाजनम् ॥ ११ ॥
सरसानि चरित्राणि, तेषामेकैकशोऽपिहि । खाँडाज्यपायसानीव, किं पुनर्मिलितान्यहो ॥ १२ ॥
आदौ धन्यमुनेस्तत्र, चरितं परिकीर्त्यते । शालिभद्रचरित्रेण, पवित्रेण विमिश्रितम् ॥१३॥ तथाहि–
जम्बूद्वीपाभिधो द्वीपो, विद्यते क्षितिमण्डले । सर्वद्वीपसमुद्राणां, मध्यवर्ती महालयः ॥ १४ ॥
सम्पूर्णपूर्णिमाश्वेत—रोचिर्मण्डलसन्निभः । विष्कम्भायामतो लक्षं, योजनानां प्रमाणतः ॥ १५ ॥
सहस्रदशकेनाधो योजनानां विसारिणा । मध्ये योजनलक्षोच्चै–नेन्द्रशैलेन शोभितः ॥ १६ ॥
वज्रमय्या जगत्या च, योजनाष्टकतुङ्गया । सर्वदिक्षु परिक्षिप्तः, प्राकारेणेव सत्पुरम् ॥ १७ ॥
वर्षैः सप्तभिराकीर्णः, षड्भिः कुलमहीधरैः । सूर्यद्वयेन्दुयुगल–समुद्द्योतितभूतलः ॥ १८ ॥
पञ्चभिरादिकुलकम् । तत्र दक्षिणतो मेरो–र्द्वीपान्तेऽम्भोधिसन्निधौ । समारोपित जीवस्य, कोदण्डस्याकृतिं दध
शतानि पञ्च षड् विंश–त्यधिकानि कलाश्च षट् । योजनानां प्रमाणेन मितं विष्कम्भतस्तथा ॥ २० ॥
पूर्वापरायतेनान्त–र्विनिपत्य समांशतः । कुड्येनेश्वरसद्मेव, वैताढ्येन द्विधाकृतम् ॥ २१ ॥

१ मनुष्यदेव मोक्ष लक्ष्म्याः. २ महान् आलय प्रासाद इव आलयः महालयः ३ श्वेतरोचिश्चन्द्रः. ४ इन्द्रशैलो मेरुः.

सहस्रयोजनायामा–स्तदर्धं चैव विस्तृतात् । हिमवत्पर्व्वतोर्द्धस्था—द्धदात्पद्माभिधानतः ॥ २२ ॥
पूर्वपश्चिमयोर्द्वारा, निर्गत्य शतपञ्चकं । योजनानां परावृत्य, दक्षिणाभिमुखं ततः ॥ २३ ॥
तवादेव त्रयोविंश–त्यधिकं च कलात्रिकं । पर्व्वताद्विनिपत्याधो, गङ्गासिन्ध्वाख्यकुण्डयोः ॥ २४ ॥
निर्गत्य दक्षिणद्वारा, भित्त्वा वैताढ्यभूधरं । यावद्दक्षिणखण्डार्द्धं, पूर्वापरमुखं ततः ॥ २५ ॥
तरलान्वितहारस्य, वक्षःस्थलकृतस्थितेः । विश्वंम्भरामहेलाया, विभ्रतीभ्यामिह श्रियम् ॥ २६ ॥
गङ्गासिन्धुस्रवन्तीभ्यां, वहन्तीभ्यां निरंतरं । षट्खण्डं भारतं क्षेत्र, विहितं किल वर्त्तते ॥ २७ ॥
नवभिःकुलकम्॥तत्र दक्षिणखण्डेषु, मध्यखण्डं मनोहरं । यात्रार्हच्चक्रवर्त्याद्या, उत्पद्यन्ते नरोत्तमाः२८
जिनबिम्बमिवद्धेधा नगरं सुप्रतिष्ठितम् । तत्राभूत्सुमनोमाला–कलितं दोषवर्जितम् ॥ २९ ॥
जितशत्रुर्नृपस्तत्र, सुचरित्रो नयान्वितः । जिनागम इव श्रीमान्, सदङ्गरुचिरोऽभवत ॥ ३० ॥
अभूत्तस्यप्रिया रम्य–पदालङ्कारधारिणी । धारिणी नाम हृद्येव, सुकवेः काव्यपद्धतिः ॥ ३१ ॥

१ चपलहारस्य श्रिय शोभाम्. २ पृथ्वीरूपस्त्रिया. ३ नाम्नागुणेन च. ४ जिनबिम्ब सुमनासां पुष्पाणां मालाभिः सहित नगरं च सुबुद्धिमल्लोकसमूहेन सहितम्. ५ सप्तनयभङ्गया सहितो जिनागमः. नृपश्च राजनीत्यान्वितः ६ मनोहरगात्रेण रुचिरो नृपः, सुद्वादशाङ्गया रुचिरो जिनागमः ७ रम्यान् पादयोरलङ्कारान् धारयतीति तथा प्रिया. काव्यपद्धतिः रम्यान् पदानि चालङ्कारांश्च धारयति

दानशौण्डकरस्तत्र, भद्रजाति. शुभोन्नतिः । इभ्यो नाम यथार्थोऽभू–न्नैगमः सामजोपमः ॥ ३२ ॥
भार्या तस्याभवल्लक्ष्मी–र्लक्ष्मीरिव मनोरमा । केवलं चञ्चला लक्ष्मीः, सा प्रकृत्या स्थिरा सदा ॥ ३३ ॥
धनचन्द्रो धनसारो, धनदेवो धनावहः । स्तम्भा इव गृहाधारा–श्चत्वारः सूनवस्तयोः ॥ ३४ ॥
धनश्रीसुन्दरीभद्रा, सुनन्दानां निजाङ्गजान् । समयौवनरूपाणां पाणिमग्राहयत्पिता ॥ ३५ ॥
इतश्च नगरे क्वापि, कोप्यभूत्कुलपुत्रकः । सभार्यः साङ्गजन्मा च, स्वकर्म्मनिरतः सुखी ॥ ३६ ॥
अथानित्यस्वभावत्वा–त्संसारे वस्तुसन्ततेः । मृत्युपर्यवमानत्वा—दुत्पन्नानां शरीरिणाम् ॥ ३७ ॥
कर्मणां च विचित्रत्वा—दसाध्यव्याधियोगतः । पश्यतामपि बन्धूनां, विपेदे कुलपुत्रकः ॥ ३८ ॥
ततः सा मृतकृत्यानी, चकारात्यन्तदुःखिता । कालेन च विशोकाभू—त्संसारस्थितिरीदृशी ॥ ३९ ॥
तथापि पत्यभावेन, सूनोरपि लघुत्वतः । अपुर्वोपार्जनाभावात्, पूर्ववित्तव्ययादपि ॥ ४० ॥
लक्ष्मीणां चंचलत्वेन, प्रक्षीणविभवा सती । बन्धुभिः परिभूता सा चिन्तयामास चेतसि ॥ ४१ ॥
तिष्ठद्भिः प्राप्यते यत्र, बन्धुभ्योपि पराभवः । न तत्र युज्यते स्थातु–मभिमानवतामिति ॥ ४२ ॥
ततः सा तत्पुरं हित्वा, शीघ्रमेव स्वमङ्गजम् । जीवितव्यमिवादाय, सुप्रतिष्ठितमाययौ ॥ ४३ ॥
तत्र चेश्वरगेहेषु, गृहकर्म्म चकार सा । तर्णकांश्चारयामास, तत्पुत्रोऽत्रस्तमानसः ॥ ४४ ॥

१ दाने निपुणो हस्तो यस्य, पक्षे मदस्रावे निपुणः शुण्डादण्डोयस्य २ गजोपम,

बालोऽपि हि कृपालुत्वा-त्तत्र तत्र जगाम सः। यत्र यत्र वनोद्देशो, हरितानि जलानि च ॥ ४५ ॥
प्रकृत्या मञ्जुभाष्येष, न तथाऽसत्यभाषणैः। तर्णकांस्तर्जयामास, न जघानातिनिष्ठुरम् ॥ ४६ ॥
केवलं तत्सुखेनैव, गमनागमने अपि। विदधेऽसौ भवन्त्येव, भाविभद्राः सुचेष्टिताः ॥ ४७ ॥
नानामहिरुहां शोभां, फलपुष्पसमुद्गमैः। जनयन्नुल्लसाथ, वसन्तसमयोऽन्यदा ॥ ४८ ॥
आम्रभक्षणसन्तुष्टाः, कूजन्ति स्म वनंप्रियाः। गायन्त्यः पञ्चमोद्गारै-र्यशांसीव यशस्विनाम् ॥ ४९ ॥
रणन्मञ्जीररोचिष्णु—कान्तापादाहतिं विना। असोकोऽसूत पुष्पाणि, समन्तात्पल्लवैः समम् ॥ ५० ॥
सकामकामिनीश्लेषा—दृते कुरुबकस्तरुः। प्रसूनैरभितः पूर्णो, बभूवातिसुगन्धिभिः ॥ ५१ ॥
प्रयुक्ता योगचूर्णस्य, गुटिकाः शङ्करारिणा। नूनं जगद्वशीकर्तुं, बभ्रमुर्भ्रमरालयः ॥ ५२ ॥
चन्दनद्रुमसम्बन्धा—त्सुगन्धाः शीतलाः स्फुटं। सुखयन्तस्तनुं यूनां, दक्षिणा वायवो ववुः ॥ ५३ ॥
लोलासु दोलासु मनोहरास्वा-रूढास्तरुण्यो भृशमुच्छलन्त्यः। गायन्त्य उच्चैः शुभवेषभूषा, यूनां मनांसि प्रसभं हरन्ति
उदारशृङ्गारधरा रमण्यो-ऽपरास्तु हल्लीसकरासकेन। हारार्द्धहारादिकृताङ्गभूषाः, समुल्लसन्त्यो ननृतुः प्रमोदात् ५५
हलधरादिनराः पुनरुद्धतं, ननृतुरूर्ध्वभुजाः कलगीतयः। क्वचिदधःकृतहस्ततलाश्चिरं, विविधवेषभृतः प्रमदान्विताः
इति वसन्तऋतौ रमतेतरां, प्रमुदितः स्म पुरोपवने जनः। न च विवेद गतं समयं सुर-व्रज इवोत्पुलको वननन्दने

१ कोकिलाः. २ रणन्नुपुरेण शोभमानस्य प्रमदापादस्याघातेन विनैव. ३ कामातुरप्रमादाया आलिंगनाद्विना. ४ स्मरेण. ५ बलात. ६ मधुरगाना ७ रोमाञ्चित..

इतश्च नगरात्तस्मा–द्भोज्यमादाय पुष्कलं । तत्रैवोद्यानिकां कर्त्तु—माजग्मुः केचिदीश्वराः ॥ ५८ ॥
तत्र केपि जनाः शालि–दालिभोज्यंघृतान्वितं । रुचिरैर्व्यञ्जनैः सार्द्धं, भुञ्जते स्मातिसुन्दरम् ॥ ५९ ॥
खण्डखाद्यादि पक्वान्नं, सुगन्धि स्वादु कोमलं । क्वचिद्दिध्योदनं चारु, जीरकाद्यतिरोचकम् ॥ ६० ॥
पायस घृतखन्डापि–स्वादीयोऽत्यन्तवन्धुरम् । अन्ये चास्वादयामासुः, स्वेच्छयाऽनुत्सुकास्तदा ॥ ६१ ॥
एवं नानाविधं भोज्यं, भुञ्जानं विक्ष्य तं जनम् । सर्वतोऽपि विशेषेण, पायसं परमादरात् ॥ ६२ ॥
वत्सीयः कुलपुत्रोऽसौ, बालकोऽपि विवेकभाक् । तर्णकांश्चारयंस्तत्र, चिन्तयामास मानसे ॥६३॥युग्मं
जनः सर्व्वोपि धन्योऽयं, कृतपुण्योऽन्यजन्मनि । नूनमेतस्य लोकस्य, सफलं जन्मजीवितम् ॥ ६४ ॥
रमते यः प्रमोदेन, स्वादु भुंक्ते ददाति च । अहं त्वधन्यो य—श्नैमिं[1], स्वोदरम्भरतामपि ॥ ६५ ॥
ईत्यसौ चिन्तयन्नेव, गत्वा च निजमन्दिरं । जनयित्री मुवाचैवं, मातर्मे देहि पायसम् ॥ ६६ ॥
ततो निःस्वतयोन्मील—त्पूर्व्वश्रीविरहव्यथा । उच्चैःस्वरमरोदीत्सा, शल्येनेवातिपीडिता ॥ ६७ ॥
आकर्ण्य प्रातिवेश्मिन्य–स्तस्यास्तं रुदितारवं । आगत्य मन्दिरं सद्यो–ऽपृच्छन् किमिति रोदिषि ॥६८॥
पायसं याचते सूनु–स्तन्नास्ति मम सांप्रतं । तत्कुतोऽस्मै ददे ? तेन, रोदिमीति जगाद सा ॥६९॥
ततस्तस्यै ददुः प्राति–वेश्मिक्यो दुग्धतन्दुलान् । सर्पिः खण्डमखण्डं द्रा–गानीय स्वस्ववेश्मतः ॥७०॥

१ प्राप्नोमि.

प्रसाध्य पायसं प्राज्यं, स्थाले चिक्षेप तस्य सा । उपरिष्टाद् घृतं खण्डं, गृहमध्येऽविशत्ततः ॥७१॥
अस्मिश्चावसरे तत्र, गुप्तित्रयपवित्रितः । ज्ञानदर्शनचारित्र—रत्नत्रितयभूषितः ॥ ७२ ॥
इर्यासमितिसम्पन्नो, मासक्षपणपारणः (णे) । नाम्नापि सुस्थितः साधु—राजगाम क्षमानिधिः ॥७३॥युग्मं
तं तथा मुनिमालोक्य, बालो रोमाञ्चमुद्वहन् । विकसद्वदनाम्भोज—श्चिन्तयामास हृद्यसौ ॥ ७४ ॥
अहो वृष्टिरनभ्रेयं, मरौ सकमलं सरः । आययौ यदयं साधु—र्मम दृष्टिपथेऽधुना ॥ ७५ ॥
तन्मन्ये मम भाग्यानि, जागरूकाणि सम्प्रतं । किमपुण्यवतो गेहे, कल्पवृक्षः प्ररोहति ? ॥ ७६ ॥
यतः—सत्पात्रं महती श्रद्धा, काले देयं यथोचितं । धर्मसाधनसामग्री, धन्यस्येयं प्रजायते ॥ ७७ ॥
पायसं श्रेयसे स्वस्य, तस्मादस्मै महात्मने । प्रयच्छामीदमेवाह—मिति संचिन्तयंस्ततः ॥ ७८ ॥
उत्तस्थौ स्थालमादाय, मुदाऽसावब्रवीदिदम् । भगवन्ननुगृह्णीष्व, पायसग्रहणेन माम् ॥ ७९ ॥
ततोऽसौ सुस्थितः साधु—रेषणागतमानसः । द्रव्यादिषूपयुक्तात्मा, पतद्ग्रहमधारयत् ॥ ८० ॥
कृतार्थोऽस्मीति चित्तेन, भावनां भावयन्नसौ । सत्पात्राय ददौ तस्मै, सम्पूर्णमपि पायसम् ॥ ८१ ॥
नत्वा तेन विसृष्टोऽसौ, लौल्यादिपरिवर्जितः । स्वस्थानं सुस्थितो गत्वा, बुभुजे भोजनं मुनिः॥८२॥
निर्निदानेन दानेन, तेन पुण्यानुबन्धिना । चमत्कारकरान् भोगा—नर्जयामास बालकः ॥ ८३ ॥

१ पात्रम्.

ततोऽसौ स्थालमादाय, भाविभद्रशुभाशयः । तत्रैवोपाविशद्याव–त्तावन्माताऽऽययौ बहिः ॥ ८४ ॥
दृष्ट्वातद्भाजनं रिक्तं, भुक्तमेतेन पायसं । मन्यमाना जनित्री सा, प्रचिक्षेप पुनः पुनः ॥ ८५ ॥
रसलौल्यवशादेष, आकंठं बुभुजे ततः । तावत्सुस्वाप सोऽत्यन्तं, यावत्सन्ध्या समागता ॥ ८६ ॥
यावत्तस्य प्रसुप्तस्य, नाजग्मुस्तर्णका बहिः । उपालभन्त तत्स्वामि–जनास्तं तावदेत्य च ॥ ८७ ॥
ततः सोपि समुत्थाय, शीघ्रमेव बहिर्ययौ । यावन्तस्तर्णका लब्धा, ददावानीय तावतः ॥ ८८ ॥
भूयो जगाम वत्सीयो, वनं वत्सान्विलोकितुम् । यावदास्ते परिभ्राम्यन्, व्यग्रस्वान्त इतस्ततः ॥८९॥
तावदस्तमनुप्राप्ते, सूरे सचक्रमोदिनि[1] । स्फुरद्धामनि निस्तन्द्रे, सर्वदोषापहारिणि[2] ॥ ९० ॥
साधाविव पदार्थौघ प्रकाशनपरायणे । जाड्यध्वंसकरे शश्व–द्विकसत्कमलाकरे[3] ॥ ९१ ॥
दुर्जनानां यथावृन्द–मन्धंकरणमुच्चकैः । व्यजृम्भततरां सूची–भेद्यं जगति शार्वरम् ॥९२॥त्रिभिर्विशेषकम्॥
अथोद्यानवनोद्देशे, वनस्पत्यादिवर्जिते । प्रासुके प्राण्यसंसक्ते, स्त्रीपण्डकपशूज्झिते ॥ ९३ ॥
साधवः शुद्धचारित्राः, पावयन्तो महीतलं । मासकल्पविहारेण, समागम्यावतस्थिरे ॥९४॥युग्मं॥
ते सन्ध्यावश्यकं कृत्वा, कृत्वा स्वाध्यायमण्डलीं । संलीना वदनद्वारे, दधाना मुखवस्त्रिकाम् ॥९५॥
मुक्ता निद्राप्रमादेन, विकथाभिर्विवर्जिताः । सिद्धान्तं गुणयामासुः, सुधामधुरया गिरा ॥ ९६ ॥

१ शोभनचक्रवाकपक्षिहर्षप्रदे, पक्षे सज्जनसमूहहर्षप्रदे. २ सर्वरात्रिनाशके, पक्षे सर्वदोषनाशके. ३ साधुपक्ष कमलाशानलक्ष्मी..

अथ सर्व्वं गृहारम्भं, प्रविहाय प्रयत्नतः। साधुपादान्नमस्कर्तु–माजग्मुः केऽप्युपासकाः ॥ ९७ ॥
पञ्चाङ्गप्रणिपातेन, तेऽनगारान् ववन्दिरे। साधवोऽपि ददुस्तेभ्यो, धर्मलाभाशिषं शुभाम् ॥ ९८ ॥
ते बद्धाञ्जलयो नम्र—मूर्धानः शुद्धभूतले। श्रावकानप्यनुज्येष्ठं, वन्दित्वोपाविशंस्ततः ॥ ९९ ॥
स तदा कुलपुत्रोऽपि, भ्राम्यंस्तत्र समाययौ। दृष्ट्वा हृष्टमनाः साधून्, प्रणम्य समुपाविशत् ॥१००॥
ततस्तन्मध्यतः साधुः, परोपकृतिलालसः। गीतार्थो देशनालब्धिसम्पन्नो देशनां व्यधात् ॥१॥तथाहि–
क्षान्तिर्मार्दवमार्जवं च सततं मुक्तिस्तपः संयमः, सत्यं शौचमकिञ्चनत्वमतुलं सद्ब्रह्मचर्यं तथा।
कर्त्तव्यं यतिनामयं दशविधो धर्मोऽचिरान्मुक्तिदो,ज्ञेयो द्वादशधा क्रमेण शिवदः सुश्रावकाणां पुनः॥२॥
सम्यक्त्वमूलानि निकेतभाजा-मणुव्रतानीह भवन्ति पञ्च।गुणव्रतानां त्रितयं च शिक्षा-व्रतानि चत्वारि सुखप्रदानि
या वीतरागेऽर्हति देवबुद्धि—र्गुरौ विशुद्धे गुरुतामनीषा। ।[३]
धर्मेऽर्हदुक्तेऽपि च धर्मबुद्धिः, सम्यक्त्वमेतत्कथितं जिनेन्द्रैः ॥ ४ ॥
अदेवतायां किल देवबुद्धि–र्गुरवशुद्धे गुरुतामतिश्च। अशुद्धधर्मेऽपि च धर्मबुद्धि–र्मिथ्यात्वमेतद्भणितं मुनिन्द्रैः ।५।
द्विधात्रिधादिना स्थूला—स्रवेभ्यो विनिवर्तनम्। अणुव्रतानि पंचैवं, प्राहुस्तीर्थंकरादयः ॥ ६ ॥
नामतस्तानि चामूनि, भवन्ति गृहिणामिह। अहिंसासूनृतास्तैन्य–ब्रह्मचर्यापरिग्रहाः ॥ ७ ॥

१ गृहीणाम्

सीमा कृता यत्र समस्तदिक्षु, न लङ्घ्यते दिग्व्रतमेतदाहुः। तद्बाह्यजीवक्षयसंनिवृत्ते-गुणव्रतं चाद्यमिदं गृहित्वे

यत्तु प्रमाणं क्रियतेऽत्र भोगो—पभोगयोः शक्तिवशान्नरेण।
भोगोपभोगाख्यमिदं द्वितीयं, गुणव्रतं स्यादिह कर्म्मनोऽन्यत् ॥ ९ ॥
स्वार्थाय या जीववधादिचेष्टा, सोऽर्थाय दण्डोऽत्र ततः परो यः।
सोऽनर्थदण्डो विरतिस्ततो या, गुणव्रतं तद्गृहिणां तृतीयम् ॥ १० ॥

त्यक्तार्त्तरौद्रस्य निशान्तभाजः,सावद्यकर्म्मोपरतस्य तस्य। मुहूर्त्तमात्रं समतास्थितिर्या,तदत्र सामायिकमामनन्ति
गुणव्रते दिक्परिमाणताम—न्यङ्गीकृतं यत्परिमाणमस्य। संक्षेपणादह्नि तथा निशायां, देशावका शव्रतमामनन्ति
यस्मिंश्चतुर्थादितपोविधानं, पर्वस्ववयस्य विधेर्निषेधः। ब्रह्मक्रिया निःप्रतिकर्मता च, तत्पौषधाख्यं व्रतमादिशन्ति
चतुर्विधाहारनिवासवस्त्र-पात्रादिदानं क्रियतेऽतिथिभ्यः।यच्छ्रावकेणातिथिसम्विभाग-व्रतं तदाहुर्जगतामधीशाः

इत्थं बभाषे द्विविधोपि, धर्मोऽचिराच्चिरेणाप्यपवर्गहेतुः।
अध्वेव तुङ्गादिसुदुर्गमोऽन्यो, न तादृशोऽभीष्टपुरासि ( स्ति ) कर्त्ता ॥ १५ ॥

न कर्त्तुमीश्महे साधु–धर्मं श्राद्धा बभाषिरे। हस्तिपल्ययनं वोढुं, सहन्ते किमु रासभाः ॥ १६ ॥
भगवन्विद्यतेऽस्माकं, कुलक्रमसमागतः। श्रावकाणामयं धर्मः, क्रमान्निर्वाणकारणम् ॥ १७ ॥

---

१ उपशमवतः

केवलं देवपूजादि—नियमः सम्प्रदीयताम् । ततः साधुरपि प्राह, सोपबृंहमिदं वचः ॥ १८ ॥
देवपूजा गुरूपास्तिः, स्वाध्यायः संयमस्तपः । दानं चेति गृहस्थानां, षट् कर्माणि दिने दिने ॥ १९ ॥
ततः साधुवचः सम्यक्, प्रतिपद्य प्रणम्य च । ते हृष्टमनसोऽत्यन्तं, जग्मुर्वेश्म निजं निजम् ॥ २० ॥
पूर्वमेव मुनिदानतोऽप्यसौ, मार्दवादृजुतया च बालकः। शुद्धशीलविकलोऽपि मानवे-ष्वायुरार्जयदतीवभोगभाक्
स प्रणम्य मुनिपादपङ्कजं काननं सुगहनं महीरुहैः । श्वापदैरविरलैर्भयानकं, तर्णकाननुययौ विमार्गितुम् ॥२२॥
अथोर्वीमिव भिन्दानं लम्बलाङ्गूलताडनैः । ज्वलद्दीपशिखाकल्प—चक्षुर्युगलतारकम् ॥ २३ ॥
क्रकचक्रूरदन्ताग्रं, हीरकांकूरदंष्ट्रकम् । प्रज्वलज्ज्वनज्वाला—वलीसोदरकेसरम् ॥ २४ ॥
शिलाविशालवक्षस्कं, वज्रमध्यकृशोदरम् । चामीकराङ्कुशाकार—नखलाङ्गलधारिणम् ॥ २५ ॥
महाबुक्कारवापूर्णा—शेषदिक्चक्रवालकम् । तत्कालदलितोद्दाम मातङ्गरक्तरालितम् ॥ २६ ॥
प्रसारितमुखक्रोडं, पञ्चवक्त्रं स बालकः । यमराजमिवायान्तं, सम्मुखीनमवेक्षत ॥ २७ ॥ पञ्चभिः कुलकम् ॥
ततो वेपथुमानेष, विविक्षुरिव भूतले । कान्दिशीको मृगशिशु—रिव यावदवास्थित ॥ २८ ॥
तावदेनमवलोक्य सिंहराट्, नीचकर्मनिरतं सुदुःखितं । एतदङ्गपरिहारतो ध्रुवं, शर्मवानयमसौ भविष्यति ॥

१ श्लाघासहितम् २ सिंहम्

चेतसेति परिचिन्त्य तत्क्षणा—दात्तवत्त्रकुहरो दृढक्रमः ।
पादतीक्ष्णनखराग्रपर्शुभि—र्जीवितव्यतरुमस्य चिच्छिदे ॥ ३० ॥ त्रिभिर्विशेषकम् ॥

स स्मरन्सन्मुनिं चेत—स्यपध्यानविवर्जितः । विपद्य नगरे तस्मि—न्नुदपद्यत शुद्धधीः ॥ ३१ ॥
इभ्यस्य मन्दिरे लक्ष्म्याः, पत्न्याः कुक्षिसरोवरे । पंक्षद्वयविशुद्धोऽसौ, राजहंसश्रियं दधत् ॥३२॥आदियुग्मं॥
गर्भस्थितेऽप्यवर्द्धिष्ट, श्रीरस्मिन्मन्दिरे पितुः । विध्वंसयति दौर्गत्यं, सुकृतां हि समागमः ॥ ३३ ॥
ततश्च नवभिर्मासै–र्दिनैः सार्धैश्च सप्तभिः । उच्चस्थैर्ग्रहसन्दोहैः, शुभलग्नोदयेऽपि च ॥ ३४ ॥
सर्वलोकचमत्कार—कारिरूपसमन्वितं । असूत तनयं लक्ष्मी—र्लक्ष्मीरिव मनोभवम् ॥ ३५ ॥ युगलम् ॥
ततो मङ्गलगीतानि, जगुः सधवयोषितः । शङ्खिकाः पूरयामासुः, शङ्खयुग्ममुरुस्वरम् ॥ ३६ ॥
ततः कुमारिका काचि–दिभ्यमागत्य वेगतः । जगाद वर्द्धसे श्रेष्ठिन्, प्रधानसुतजन्मना ॥ ३७ ॥
उत्कृष्टकुङ्कुमक्षोदैः, पिङ्गमङ्गं विधाय सः । तस्याः कण्ठे (पि) निचिक्षेप, पुष्पमालां विकस्वराम् ॥ ३८ ॥
तथा तस्यै प्रधानानि, वस्त्राण्याभरणानि च । ददौ ताम्बूलयुक्तानि, स पीतः सुतजन्मना ॥ ३९ ॥
पुत्रजन्मोत्सवप्रीतै–रानीतं स्वजनादिभिः । स वस्त्राक्षतपात्रादि, प्रतीयेष निरन्तरम् ॥ ४० ॥
चारुपुगफलान्येष नागवल्लीदलैः सह । ताबूलं प्रत्यदात्तेभ्यः, क्रमज्ञा हि विचक्षणाः ॥ ४१ ॥

१ मातापितृकुलविशुद्ध., राज हंस उज्ज्वलपक्षद्वय.. २ जग्राह

अन्येभ्यो भट्टचट्टादि—याचकेभ्यो यथोचितम् । दानं ददावसौ सन्तो नोचितस्थितिभेदिनः ॥ ४२ ॥
एवं स्थितिकृतस्तस्य, दिनानि व्यतिचक्रमुः । एकादश ततः प्राप्ते, द्वादशे दिवसे मुदा ॥ ४३ ॥
इभ्यस्ततो विधायाशु—विशुद्धिं सूतिकर्मणः । बन्धूनाविधैर्भोज्यै—र्भोजयामास भक्तितः ॥ ४४ ॥
ततः सुखासनस्थेभ्यः, स्वजनेभ्यो वितीर्य सः । नानावस्त्राणि ताम्बूलं, तत्पुरः सोऽब्रवीदिदम् ॥ ४५ ॥
गर्भस्थितेऽप्यवर्द्धन्त, धनधान्यादिकाः श्रियः । नाले निखन्यमाने च, भूमौ विवरमध्यतः ॥ ४६ ॥
आविरासीन्निधिर्भूरि—दीनारपरिपूरितः । यतोऽस्मि[स्म]न्मन्दिरे बाल—स्तस्माद्धन्योऽस्तु नामतः ॥ ४७ ॥
अवक्रः सर्वथाप्येष, वर्द्धमानो दिने दिने । बभूवोपचितश्चित्रं, द्वितीयाचन्द्रमा इव ॥ ४८ ॥
अथाष्टवार्षिकस्यास्य, कलाग्रहणयोग्यताम् । विज्ञायेभ्योऽर्पयामास, कलाचार्याय तं सुतम् ॥ ४९ ॥
धन्योऽप्यावर्जयामास, प्रज्ञया विनयेन च । अतिपाठादरेणापि, कलाचार्यस्य मानसम् ॥ ५० ॥
कलाचार्योऽपि यत्नेन, तथासौ तमपीठत् । यथा स स्वल्पकालेन, जग्राह सकलाः कलाः ॥ ५१ ॥
सीमन्तिनीजनमनः—कैरवाकरशीतगुः । सर्वकार्यक्षमं धन्यः, क्रमेण प्राप यौवनम् ॥ ५२ ॥
बहुमानो विशेषेण, तस्मिन्पित्रोरजायत । सत्स्वप्यन्येष्वपत्येषु, तौ हि तद्गुणवेदिनौ ॥ ५३ ॥
ईर्ष्यां विदधिरे पुत्रा, धनचन्द्रादयस्ततः । अपत्यत्वे समानेऽपि, विशेषोऽत्र किमित्यहो ॥ ५४ ॥

१ द्वितीयाचन्द्रो वक्रः सन् वर्धते, अयं तु अवक्रः सन् वर्धते इत्याश्चर्यम्. २ वशीचकार. ३ शीतगुः चन्द्रः

पितरौ तानवादिष्टां, भोः पुत्राः पुण्यवानयम् । इभ्यत्वं नाममात्रेण, समभूत्प्रथमं हि नः ॥ ५५ ॥
साम्प्रतं पुनरेतस्य, पुण्याढ्यस्यानुभावतः । सार्थकं वयमिभ्यत्वं, प्राप्ता लक्ष्मीप्रवर्द्धनात् ॥ ५६ ॥
ततोऽवोचन्त ते लक्ष्मीः, पुण्यैः कस्यापि वर्द्धते । इति ज्ञानादृते सम्यक्, ज्ञातुं न खलु पार्यते ॥ ५७ ॥
पिताह स्वं परीक्षध्वं, पुण्यं प्रत्येकमेव भोः । द्वात्रिंशतं समादाय, रूपकाणामिमां सुताः ॥ ५८ ॥
रूपकाणि गृहीत्वा ते, ययुर्विपणिवीथिकाम् । निजपुण्यं परिज्ञातुं, कुर्व्वते क्रयविक्रयान् ॥ ५९ ॥
वक्रोदरबृहच्छृंगं, बलिष्ठं कर्कटेक्षणं । वृत्तग्रीव महामेषं, श्वेतं मांसलविग्रहम् ॥ ६० ॥
उज्वलैश्चित्रितं दृष्ट्वा, वर्णकैर्गैरिकादिभिः । जग्राह तत्र मूल्येन, धन्यस्तैरेव रूपकैः ॥ ६१ ॥ युग्मं ॥
तत्रारूढः स तेजस्वी, बिभ्राणः काञ्चनश्रियम् । यथा वह्निदिशः स्वामी, राजमार्गमवातरत् ॥ ६२ ॥
तत्राभिमुखमागच्छन्, जितशत्रुमहीपतेः । कुमारो राजपालाख्यो, नीतिमानब्रवीदिदम् ॥ ६३ ॥

श्रेष्ठ्यङ्गज त्वं निजमेनमेडकं, किं योधयस्युन्मदमुग्रतेजसा ।
ममैडकेनेति जगाद धन्यको, भवत्विदं किन्तु पणो विधीयताम् ॥ ६४ ॥
यस्यैडको जेष्यति तेन लभ्यः, पणो [ने]ऽत्र दीनारसहस्रमेकम् ।
एवं भणित्वोपवनं गतौ तौ, सकौतुकोत्ताल जनेन युक्तौ ॥ ६५ ॥

१ अस्माकम्. २ कर्कटो जीवविशेष. तस्य नेत्रमिव नेत्रं यस्य.

अन्योन्यं तावयुध्येतां, सहर्षामर्षडम्बरौ । जितो धन्यस्य मेषेणे—तरः पुण्यं हि सिद्धिदम् ॥ ६६ ॥
दीनाराणां तता दत्त्वा, सहस्रं श्रेष्ठिसूनवे । धीरधीस्तं समापृच्छय, कुमारः स्वगृहं ययौ ॥ ६७ ॥
दीनाराणां सहस्रेण, जितेन सममेडकम् । धन्यः स्वगृहमागत्य, जनकाय ददौ गुणी ॥ ६८ ॥
धनचन्द्रादयः सर्वे, कुर्वाणाः क्रयविक्रयान् । समस्तमतिनिन्युस्ते, वासरं श्रेष्ठिसूनवः ॥ ६९ ॥
तथापि नाभवल्लाभो, मूलच्छेदोऽभवत्परम् । केन कर्मपरीणामः, शक्यते कर्तुमन्यथा ॥ ७० ॥
निर्लक्षणा विलक्षास्ते, पितुरन्तिकमाययुः । जनकेनाप्युपालब्धाः, सामर्पा ( र्षम् ) इदमूचिरे ॥ ७१ ॥
लाभो घुणाक्षरन्यायादेवमेवाभवद्यदि । धन्यस्यास्य तदात्रायं, पुण्यवाञ्जियताऽपि किम् ॥ ७२ ॥
अथ विज्ञाय सामर्षा—श्चतुरश्चतुरोऽपि तान । प्रत्येकं रूपकाणां च, षष्टिं श्रेष्ठी पुनर्ददौ ॥ ७३ ॥
जगाद च पुनर्गत्वा, व्यवसायमनिन्दितम् । निजपुण्यपरीक्षार्थं, यूयं कुरुत सादरम् ॥ ७४ ॥
गत्वा विपणिवीथीं ते, विदधुः क्रयविक्रयाम् । लाभो नाभूत्परं तेषां, विचित्रा कर्मणां गतिः ॥ ७५ ॥
धन्योऽगात्षष्टिमादाय, रूपकाणां पुराद्बहिः । सार्थे तत्राददे खट्वां, तैरेस्यन्त मनोहराम् ॥ ७६ ॥
आनीय मन्दिरे मातु—रर्पयामास तामसौ । यावन्निरूपयामास, खट्वां सम्यक् जनन्यपि ॥ ७७ ॥
तावदेकत्र देशेऽस्या, अद्राक्षीद् गुप्तकीलिकाम् । आचकर्ष ततस्तां सा, बभूव विवरं ततः ॥ ७८ ॥

१ मुद्रा इति प्रत्यन्तरम्. २ जनसमूहे यद्वा 'सोऽथ' इति पाठः ३ रूपकैः.

तत्रापश्यदमूल्यानि, रत्नानि प्रवराणि सा । उद्योतमन्धकारेऽपि सुतरां यानि कुर्व्वते ॥ ७९ ॥
गृहीत्वा तानि सर्व्वाणि, कौतुकेनोच्चखान सा । पर्यङ्ककीलिकाः सर्वाः, किं किं लोभो न कारयेत् ॥ ८० ॥
सर्वत्रानर्घ्यरत्नानि दृष्ट्वा चेतस्यचिन्तयत् । महाधनस्य कस्यापि, पर्यङ्कोऽयमहो ध्रुवम् ॥ ८१ ॥
परलोकमनुप्राप्ते, तस्मिंस्तत्स्वजनैरयम् । तत्स्वरूपमजानानैः ब्राह्मणाय समर्पितः ॥ ८२ ॥
द्विजेनाप्यनभिज्ञेन, विक्रीतो रूपकैरपि । पार्श्वे मदीयपुत्रस्य, धन्यस्यास्य महामतेः ॥ ८३ ॥
तन्नूनं मन्दभाग्येभ्यो, याति श्रीर्विपुलापि हि । पूर्वोपार्जितपुण्याना—मायाति श्रीः स्वयम्वरा ॥ ८४ ॥
तदयं मम पुत्रोऽपि, धन्यो भाग्यनिधिर्ध्रुवम् । सम्पदः स्वयमायान्ति, यस्य क्लेशं विनापि हि ॥ ८५ ॥
यामिनीयामयुग्मेन, युक्तं सकलवासरम् । व्यतीयार्यान्यपुत्राणां, कुर्वतां क्रयविक्रयान् ॥ ८६ ॥
न कपर्दकमात्रं ते, लेभिरे केवलं क्षयः । मूलस्याप्यभवत्पुण्या—पुण्ययोरन्तरं महत् ॥ ८७ ॥
पितृभ्यामथ ते प्रोक्ताः, कुलाभ्युदयकारकः । वत्सा ! धन्योऽयमस्माकं, पुण्यैरेवोदपद्यत ॥ ८८ ॥
तदत्र भवतां कर्त्तुं, वैमनस्यं न युज्यते । श्रीखण्डतरुरेकोऽपि, वनं सुरभयत्यलम् ॥ ८९ ॥
इत्येवमपि ते प्रोक्ता, नैव मुञ्चन्ति मत्सरम् । प्रायेण विरला भूमौ, गुणिनां गुणवेदिनः ॥ ९० ॥
यतः—नागुणी गुणिनं वेत्ति, गुणी गुणिषु मत्सरी । गुणी गुणप्रियश्चेति, विरलः सरलाशयः ॥ ९१ ॥
धनचन्द्रप्रिया ज्ञात्वा, धन्यं प्रति समत्सरान् । जिघांसून् सकलान् भ्रातॄ—श्चिन्तयामास चेतसि ॥ ९२ ॥

रक्षणीयं प्रयत्नेन, नररत्नमिदं मया । यथा तथेति निश्चित्य, धन्यायासौ न्यवेदयत् ॥ ९३ ॥
महात्मन् सोदराः सर्वे, त्वयि द्विष्टा जिघांसवः । अदो निवेदितं यत्ते, रोचते तत्कुरु द्रुतम् ॥९४॥
अहो मोहस्य माहात्म्यं, यदेते सोदरा अपि । भ्रात्रे निरपराधाय, मह्यं द्रुह्यन्ति बालिशाः ॥ ९५ ॥
यावन्नैते स्वचित्तानु-रूपं किमपि कुर्वते । तावन्मे युज्यते कर्तुं, देशान्तरमितः पुरात् ॥ ९६ ॥
इति सञ्चिन्त्य धन्योऽसौ, खड्गमादाय पाणिना । पितृभ्यामप्य विज्ञातो, विभावर्यां विनिर्ययौ ९७
सोऽसहायो महाबाहु-र्मार्गं गच्छति निर्भयः । द्वितीयः किमु कोऽपि स्या-द्वने सञ्चरतो हरेः॥९८॥
गच्छतोऽप्यन्तरालेऽस्य, ग्रामः कोऽपि समागमत् । कुटुम्बिभिः समाकीर्णः, समृद्धैर्गोधनादिभिः ९९
हलेनोद्धुरधुर्येण, कृषन्तं क्षेत्रमञ्जसा । धन्यः परिसरे तस्या-पश्यदेकं कृषीवलम् ॥ २०० ॥
श्रेष्ठिसूनुस्तमप्राक्षीद्- गम्भीरमृदुभाषया । भो भद्र ! ब्रूह्ययं पन्थाः, कां पुरीमुपतिष्ठते ॥ १ ॥
ततस्तद्वचनं श्रुत्वा, कर्णयोरमृतं स्रवत् । रूपं चाद्भुतमालोक्य, मनसासौ विसिष्मिये ॥ २ ॥
ततोऽभिमुखमागत्य, प्राञ्जलिः स कृषीवलः । धन्यं प्रति जगादैवं, क्षेत्रेऽस्मिन् पश्य वर्त्तते ॥३॥
सरलः सहकारोऽय-मुन्नतः सुमनःप्रियः । भवानिवातिसच्छायो, महाशाखासमन्वितः ॥ ४ ॥
तस्मादिह महाभाग, क्षणं विश्रम्यतामिति । अभ्यर्थितः स तेनैवं, जगामाम्रतरोस्तलम् ॥ ५ ॥

१ बलवद्वृषभेण. २ आम्रवृक्षः ३ देवानां सज्जनानां वा प्रियः. ४ शीतलच्छायावान्, पक्षे सत्कान्तिर्भवान्.

कस्मिंश्चिदुत्सवे तत्र, भक्तमादाय पायसम् । खण्डाज्ययुक्तमागच्छत्, कृषीबलसधर्म्मिणी ॥ ६ ॥
तामवादीत्कर्षकोऽपि, प्रियेऽमुं भोजयातिथिम् । गुणी प्राघूर्णकः काले, यतः पुण्यैरवाप्यते ॥ ७ ॥
ततः प्रीता सती सा तं, भोजयामास पायसं । चकर्ष कर्षकः क्षेत्रम्, बुभुजे यावदिभ्यसूः ॥ ८ ॥
तथैव कर्षतस्तस्या—लगत्सीरमुखं मुखे । महानिधानकुम्भस्य, भूम्यन्तर्वर्त्तिनस्ततः ॥ ९ ॥
यावन्निरूपयत्येष, भूमिं शब्दानुसारतः । तावद्दीनारसम्पूर्णं, स निधानमवैक्षत ॥ १० ॥
भुक्तोत्थितस्य धन्यस्य, समीपं स कृषीवलः । ततो निधानमादाय, सप्रमोदः समागमत् ॥ ११ ॥
बद्धाञ्जलिरुवाचैवं, गृहाणाऽनुगृहाण माम् । महापुण्यनिधे पुण्यं, स्वकीयमिव पुष्कलम् ॥ १२ ॥
धन्यः किमिदमित्यूचे, स प्रोचे कर्षता मया । तव प्रभावतोऽद्यैव, सम्प्राप्तोऽयं महानिधिः ॥ १३ ॥
भवेयुर्भागधेयानि, यदि मेऽत्र महामते ! । क्षेत्रं कर्षन् सदाप्येनं पूर्व्वमेवाप्नुयामहम् ॥ १४ ॥
पुण्यैर्ममायमायुष्मं–श्चेत्प्रादुरभविष्यत । एतावद्दिवसैरेवं, नालप्स्यत मया किमु ॥१५॥पाठान्तरम्॥
तस्मात्त्वदीयमेवेदं, निधानं स्वीकुरु द्रुतम् । पुरुषोत्तम एवार्हः, कौस्तुभस्य महामणेः ॥ १६ ॥
श्रुत्वा हलधरस्यापि, वचश्चातुर्यमद्भुतम् । धन्योऽतिमुदितः प्राह–मृतद्रवमिव स्रवन् ॥ १७ ॥
अहो विचारचातुर्य–महो वैनयिकी क्रिया । अहो निर्लोभतास्यैव(तातेच), यन्निधिं न जिघृक्षति(सि)

१ अतिथि.. २ हलस्याग्रभाग. ३ निधिम्: ४ .ग्रहीतुमिंच्छति.

पुण्यैरहमिहायात—स्त्वदीयैरेव साम्प्रतम् । तुभ्यं प्रदत्तमेवैनं, भद्रादत्स्व त्वमेव हि ॥ १९ ॥
ततस्तं निधिमादाया—विज्ञातोऽन्यैर्जनैर्मुदा । स धन्यः सप्रियश्चापि, निजं धाम जगाम सः ॥२०॥

धन्यस्य सम्पर्कमवाप्य तत्र, कृषीवलोऽभूदितरेभ्य आढ्यः ।
चिन्तामणेर्योग इहाङ्गभाजां, दारिद्र्यमुद्राम्प्रणिहन्ति किं न ॥ २१ ॥

॥ इति श्री धन्यशालिभद्रमहर्षिचरिते धन्यपूर्वभवसुमतिष्ठपुरनिर्गमन
कृषीवलगृहावस्थानवर्णनो नाम प्रथमः परिच्छेदः ॥ १ ॥

## ॥ अथ द्वितीय सर्गः ॥

इतश्च भरतेऽत्रैव, पूर्वदिङ् मुखमण्डनम् । देशोऽस्ति मगधाभिख्यो, विख्यातो जगतीतले ॥ १ ॥
तत्रासीद्विबुधभ्राजि, वृषाध्यासितमूर्जितम् । पुरं राजगृहं नाम, दिविषन्नगरोपमम् ॥ २ ॥
यत्र प्राग्जन्ममित्रेण, मेतार्यस्य दिवौकसा । बुध्ध्याऽभयकुमारस्य, प्राकारोऽकारि काञ्चनः ॥ ३ ॥
स शशास विशामीश—स्तत्पुरं श्रेणिकाभिधः । येन श्रीमन्महावीर—पादाब्जे भ्रमरायितम् ॥ ४ ॥
सर्व्वदैवाभयोपेतः, क्ष्माभृन्मौलिमण्डनः । यः श्रीवीर इवेहाभू—दग्रे च भविता जिनः ॥ ५ ॥
चारुशालीनताशीला—लङ्कारालङ्कृताः सदा । रूपसौन्दर्यसंयुक्ताः सर्व्वाज्ञाज्ञापरायणाः ॥ ६ ॥
सुनन्दा चेल्लणादेवी, धारिणीति सुविश्रुताः । समस्तान्तःपुरश्रेष्ठा—स्तिस्रस्तस्याभवन् प्रियाः ॥७॥युग्मम्
सुनन्दा श्रेष्ठीसूः सूनुं, ध्देर्याऽभयमजीजनत् । रामं शत्रुमनः—शल्यं कौशल्येवाद्भुतश्रियम् ॥ ८ ॥

अजीजनत् कूणिकमात्मजातं, प्राक्चेल्लणा हल्लविहल्लकाभ्यां ।
लङ्काधिनाथं किल कुम्भकर्ण—बिभीषणाभ्यामिह कैकसीव ॥ ९ ॥

मेघकुमारनामानं, धारिणी सुषुवे सुतं । प्रस्फूर्जत्तेजसं चारु, रत्नं रोहणभूरिव ॥ १० ॥
अथात्रैव पुरे श्रेष्ठी, श्रेष्ठो नैगमसन्ततेः । गोभद्राख्यो धनेनोच्चै—रासीद्वैश्रवणोपमः ॥ ११ ॥

१ पण्डितैः पक्षे देवैः शोभितम्. २ वृषो धर्मः पक्षे इन्द्र तत्सहितम्. ३ स्वर्गोपमम्. ४ अभयकुमारेण सहितः श्रेणिकः, पक्षे भयरहितः श्रीवीरः. ५ राज्ञां शीर्षमंडन मुकुटरूपः ६ सुन्दरे लज्जालुताशीले एवालङ्कारौ ताभ्यामलंकृताः. ७ नाम्ना गुणेन चअभयः तम् ८ कुबेरसदृशः

तस्याऽभून्नामतो भद्रा भंद्रानेकपगामिनी । नीरागाङ्गी सती भार्या, चन्द्रार्द्धरुचिरालिका ॥ १२ ॥
फलपुष्पप्रधानानां, वृक्षाणां मेघवत्तथा । नाम्ना कुसुमपालोऽभू-द् वृद्धिकृत्तत्र मालिकः ॥ १३ ॥
बकुलश्रीतिविख्याता, नाम्ना तस्य सधर्म्मिणी । वरशीलसुगन्धाढ्या, बकुलश्रीरिवाभवत् ॥१४॥
इतश्च धारिणी देवी, श्रेणिकस्य महीभृतः । मेनेव सुषुवे पुत्रीं, सुरूपां सर्वमङ्गलाम् ॥ १५ ॥
अथ ज्ञाताङ्गजाजन्मा, काचिदागत्य चेटिका । सुनिर्मलगुणश्रेणि—श्रेणिकाय व्यजिज्ञपत् ॥ १६ ॥
स्वामिन्मेघ प्रसूर्देवी, धारिणी वरतेजसम् । सुखेन सुषुवे कन्यां, द्यौरिवाचिररोचिषम् ॥ १७ ॥
तदाकर्ण्य वचस्तस्याः, प्रमोदभरपूरितः । आदिदेश पुरारक्षं, श्रेणिको नरपुङ्गवः ॥ १८ ॥
मन्त्रिणः सार्थवाहस्य, श्रेष्ठिनो वणिजोऽथवा । द्विजस्योद्यानलस्या-परस्यापीह कस्यचित् ॥ १९ ॥
भार्याऽमुष्यामिवभावर्यां, या काचित्सुषुवे सुताम् । पणवाघोषणापूर्वं, ज्ञात्वा तां मे निवेदय ॥२०॥
पटहाघोषणेनासा-वारक्षः पुरुषैर्निजैः । घोषयित्वा परिज्ञाय, नरेन्द्राय व्यजिज्ञपत् ॥ २१ ॥
देव त्वन्नगरे भद्रा, गोभद्रश्रेष्ठिनः प्रिया । भार्या कुसुमपालस्य, बकुलश्रीरपीतरा ॥ २२ ॥
सुषुवाते निशीथिन्या-मुभये अपि कन्यके । स्फुरत्तेजोभरे मुक्ता-शुक्तीमुक्ते इवामले ॥२३॥युग्मम्॥
नगरारक्षकं भूयो, भूमिपालोऽभ्यधादिति । गत्वा तौ पुनराख्याहि, गोभद्रोद्यानपालकौ ॥ २४ ॥

---

१ भद्रजाति गजगामिनी. २ अष्टमीचन्द्रवत् मनोहरं कपालं यस्याः सा. ३ बकुलवृक्षशोभा. ४ विद्युतम्.

आनेतव्ये निजे कन्ये, विशुद्धे सूतके सति । धारिणीकुक्षि जातांया[1], सुतांया मम सन्निधौ ॥२५॥
स्निग्धाः सख्यो भविष्यन्ति, यस्मादेताः परस्परम् । ततस्तेन विनिर्दिष्टं, राजादिष्टं पुरस्तयोः ॥२६॥
ततः सूतकसशुद्धिं, कृत्वा कतिपयैर्दिनैः । निन्यतुः सह धात्रीभ्यां, तौ पुत्र्यौ श्रेणिकान्तिके ॥२७॥
तासां रूपं समालोक्य, मुदितो नृपपुङ्गवः । नामानि कर्तुमारेभे, परमोत्सवपूर्वकम् ॥ २८ ॥
मुखलक्ष्म्या जयत्येषा, सोमंश्रियमपीह यत् । सोमश्रीत्वभिधाऽमुष्या—स्तदस्तु दुहितुर्मम ॥ २९ ॥
सुन्दरी मूर्तिरेतस्याः, सुन्दरी लक्षणैरपि । सुन्दरीत्वाख्ययाऽस्त्वेषा, भद्रागोभद्रयोः सुता ॥ ३० ॥
यतोभात्यधुना वर्या, कण्ठे[2]ऽस्याः कुसुमावली । सुता कुसुमपालस्य, ततोस्तु कुसुमावली ॥ ३१ ॥
सान्वयानीति नामानि, विधाय वसुधाधवः । अलङ्कारादिभिः कन्याः, सत्कृत्य विससर्ज ताः॥३२॥
अवर्धन्त गतापायं, कन्यकाः स्वेषु वेश्मसु । कन्दरेषु सुवर्णाद्रेः, सुखं कल्पलता इव ॥ ३३ ॥
बभूवुर्वर्द्धमानास्ताः, कलादानोचितास्ततः । कलाचार्याय पाठार्थं, (समये) तममेवाऽऽर्पयन्नृपः ॥३४॥
इतश्च गङ्गापुलिनविस्तीर्णे, पार्श्वद्वयसमुन्नते । मध्यभागे विनम्रे च, हंसतूलोपधानके ॥ ३५ ॥
श्वेतपदांशुकाच्छन्ने, नवनीतम्रदीयसि । तल्पेऽनल्पसुखे सुप्ता, भद्रा गोभद्रवल्लभा ॥ ३६ ॥
स्वस्थाङ्गी नातिनिद्राणा, शालिक्षेत्रं फलोल्वणम् । यामिन्याः पश्चिमे यामे, दृष्ट्वा स्वप्नमजागरीत् ।३७।त्रिभिर्विशेषकं।

१ चन्द्रशोभाम्. २ नते.

तल्पं त्यक्त्वाऽऽसने स्थित्वा, भद्रा पञ्चनमस्कृतिम् । उदैरयदुदारेण, स्वरेणालस्यवर्जिता ॥३८॥
ततः स्वप्नमनुस्मृत्या–भ्युत्थाय गतसंभ्रमा । हंसगत्यनुकारिण्या, गत्याऽऽगात्पत्युरन्तिकम्॥३९॥युग्मम्
तैस्तैर्मनोमहानन्द–दायिभिर्मधुरैः स्वरैः । पतिं सा बोधयामास, कोकिलालापकोमलैः ॥ ४० ॥
स्वामिन् वासगृहे सुप्ता, स्वप्नेऽपश्यमहं निशः । पश्चिमे प्रहरे शालि–क्षेत्रं भूरिफलान्वितम् ॥४१॥
स्वप्नस्य तदिहैतस्य, विशिष्टं किं फलं मम । भविष्यत्यनवद्यस्य, प्रसद्य प्रतिपादय ॥ ४२ ॥
हृष्टः प्रोवाच गोभद्रो, भद्रां भद्राकृतिः सुधीः । प्रिये! स्वप्नस्त्वयाऽलाभि, भद्रो भद्रेभगामिनि॥४३॥
सर्वाङ्गसुभगो भोगी, भाग्यवान् श्रिय आश्रयः । स्वप्नस्यास्य प्रभावेण, सूनुस्तव भविष्यति॥४४॥
इति भर्तृवचः श्रुत्वा–ऽवद्भद्रा कृताञ्जलिः । यथाऽऽत्थ त्वं तथा नाथ!, भूयादवितथं मम ॥ ४५ ॥
इत्युदित्वा ततो भद्रा, प्रमोदभरनिर्भरा । बबन्ध शकुनग्रन्थिं, प्रत्यक्षं भर्तुरेव हि ॥ ४६ ॥
स्वस्थानमेत्य रात्र्यन्तं, जाग्रती साऽत्यवाहयत् । सत्कथाभिः पवित्राभि–र्गुरूणामर्हतामपि ॥ ४७ ॥
ततः प्रभृति दध्रे सा, गर्भमन्यूनलक्षणम् । मुक्ताशुक्तिपुटीवोच्चै–र्मुक्ताफलमनुत्तमम् ॥ ४८ ॥
भद्रायाः सान्द्रभद्रायाः, सुभंगंभावुकान्यथ । गर्भानुभावतः सर्वा–ण्यङ्गोपाङ्गानि जज्ञिरे ॥ ४९ ॥
आपाण्डुरस्फुरद्गण्ड—स्थलं वदनमण्डलम् । शरदुत्तेजितज्योति—श्चन्द्रबिम्बश्रियं दधौ ॥ ५० ॥

१ अगणयत्. २ कथय. ३ वदसि. ४ न विद्यत उत्तमं यस्मात् सर्वोत्तममित्यर्थः ५ अति कल्याणवत्याः. ६ सौभाग्यवन्ति.

अभूतामुज्ज्वले नेत्रे, विशाले श्यामतारिके । पुण्डरीके इवोत्फुल्ले, अन्तर्भ्राम्यन्मधुंव्रते ॥ ५१ ॥
लम्बलोले श्रवःपाल्यौ, त्यक्ताष्टापदकुण्डले । स्मरप्रेङ्खे इवाभातां, सुसंस्थानमनोहरे ॥ ५२ ॥
कुचौ शितिमुखौ गौरौ, लावण्यामृतपूरितौ । स्वर्णकुम्भाविव श्यामा-म्भोजच्छन्नौ विरेजतुः ।५३।
उदरं गूढगर्भत्वा—न्नैव तत्याज तानवम् । भवन्ति मातरो गूढ-गर्भा यत्पुण्यशालिनाम् ॥ ५४ ॥
गतिरप्यलसा तस्या, राजहंस्या इवाबभौ । वचोऽपि मधुरं श्रुत्यो-रमृतस्यन्दि चाऽभवत् ॥ ५५ ॥
ईक्षणक्षणदायीनि, लक्षणानीतराण्यपि । सुन्दराण्यभवंस्तस्या, देहे गर्भप्रभावतः ॥ ५६ ॥
न स्निग्धैर्नातिरूक्षैश्च, नात्युष्णैर्नातिशीतलैः । नैव तिक्तैर्नचाल्म्लै—र्न क्षारैर्न च नीरसैः ॥ ५७ ॥
किन्तु मृष्टैर्हितैः पथ्यै-र्मधुरैर्मुखरोचकैः । मनःप्रह्लादिभिर्देह-सुखदैः सर्वदैव हि ॥ ५८ ॥
अशनैः पानकैः खाद्यैः, स्वाद्यैरत्यन्तसुन्दरैः । गर्भं तं वर्द्धयामास, श्रेष्ठिपत्नी प्रयत्नतः ॥ ५९ ॥ त्रिभिर्विशेषकम् ॥
ऋषभादिमहावीर-पर्य्यन्तानामिहार्हताम् । पुण्डरीकेन्द्रभूत्यादि-महर्षीणां कदाचन ॥ ६० ॥
सीताञ्जनासुभद्रादि सतीनां च कदापि हि । पवित्राणि चरित्राणि, शुश्रावासौ प्रमोदिनी ।६१।युग्मम्
कदाचित्कलगीतानि, गुरूणामर्हतामपि । सा पिबत्यमृतानीव, श्रवःपत्रपुटैः स्फुटम् ॥ ६२ ॥
कदाचिन्नर्तकीनृत्य—मङ्गहारादिबन्धुरम् । हावभावमनोहारि, पश्यति निश्चलासना ॥ ६३ ॥

१ मधुव्रता भ्रमरा २ कर्णसमीप भागौ,३ त्यक्तसुवर्णकुण्डले ४ कामदोले ५ श्याममुखौ ६ कृशत्वम् ७ नेत्रोत्सवदायीनि ८ शोधितैः

कदाचिच्चित्रशालासु, चरितानि महात्मनाम् । समयं व्यतिचक्राम, वीक्षमाणा सुखेन सा ॥ ६४ ॥ त्रिभिर्विशेषकम् ॥

अत्रान्तरे च गोभद्रः, श्रेष्ठी भूरिधनोऽपि सन् । प्रतस्थेऽम्भोधियात्रायां, वित्ताशा हि बलीयसी ६५

यतो न गणयत्येव, गेहत्यागं सुदुष्करम् । न च वल्लभया सार्धं, दुस्सहं विरहानलम् ॥ ६६ ॥

न चानेकविधं मार्ग—ष्टमत्यन्तदारुणम् । प्रणाशं न च निद्रायाः, क्षपायां वासरेऽपि वा ॥६७॥

शीतवातातपक्षुत्तृ—ण्महाक्लेशोद्भवं न च । तस्कराणामवस्कन्दं, विलुण्टनभयं न च ॥ ६८ ॥

सिंहादिश्वापदेभ्यस्तु, क्रूरेभ्योऽपि न साध्वसम् । किं भूयसा निजस्यापि, शरीरस्य परिक्षयम्॥६९ ॥

देशाद्देशान्तरं भ्राम्य—न्नजस्रं पृथिवीतले । लोभभूताभिभूतः स—न्मनुष्यो धनहेतवे ॥ ७० ॥ षड्भिरादिकुलकम्॥

शकटोष्ट्रबलीवर्दा—द्येषु प्रवहणेषु सः । चतुर्धा भाण्डमादाया—रोपयामास भूरिशः ॥ ७१ ॥

सन्तानवृद्धनारीभिः, कृतकौतुकमङ्गलः । शकुनेष्वनुकूलेषु चचाल विपुलाशयः ॥ ७२ ॥

वाहनेष्वतिभारं ना—रोपयन् करुणानिधिः । उत्प्रयाणकमातन्वन्, स्थाने शष्पाम्बुशालिनि ॥७३॥

क्रमेणानुत्सुकः श्रेष्ठी महेभ्यैरतिसङ्कुलम् । पुरं श्रीनिलयं प्राप—दुपकण्ठं महोदधेः ॥ ७४ ॥

दिनानि कतिचित्तत्र, स्थित्वा श्रेष्ठी सुखेन सः । केशांचिन्मंक्षु भाण्डानां, चकार क्रयविक्रयम् ॥

सम्प्राप्तोचितलाभोऽपि, प्रचुरद्रव्यलिप्सया । परतीरोचितं भाण्डं, यानपात्रे न्यधत्त सः ॥ ७६ ॥

---

१ भयम् . २ वाहनेषु. ३ तृणजलवति. ४ शीघ्रम्.

गोभद्रः शुभवेलाया—मर्चित्वाम्भोधिदेवताम् । यानपात्रं समारोह—त्तदैवोत्क्षिप्तनांगरम् ॥ ७७ ॥
पोतः प्रतिपगामिन्यां, वेलायामतिवेगतः । प्रणुन्नः कर्णधारेण, गन्तुं प्रवृत्तेऽम्बुधौ ॥ ७८ ॥
इतश्च भद्रा गोभद्र—प्रिया राजगृहे पुरे । सल्लक्षणमधाद्गर्भं, व्यक्तं द्यौरिव वारिदम् ॥ ७९ ॥
श्रीमज्जिनेन्द्रचैत्येषु, श्रीराजगृहवर्तिषु । कारयामि जिनार्चानां, स्नानमर्चां च भक्तितः ॥ ८० ॥
मुनिभ्यो गुणपात्रेभ्यः, स्वहस्तेन ददाम्यहम् । शुद्धान्नपानपात्राणि, वस्त्राणि बहुमानतः ॥ ८१ ॥
समानधार्मिकेभ्यश्च, दानं यच्छामि यत्नतः । दीनानाथादिजन्तुभ्य—स्तूर्णमेवोचितं त्विति ॥ ८२ ॥
दोहदोऽभूत्तृतीयेऽस्या, मासे गर्भानुभावतः । अकारि सर्वमप्येत—त्तुष्टया विधिना तया ॥ ८३ ॥
इत्थं पूरितदोहदा प्रमुदित—स्वान्ता प्रशान्ताकृतिः, शश्वद्धर्मपरायणा परिजनस्यानन्दमातन्वती ।
सा मासैर्नवभिस्तथा व्यतिगतैः सार्द्धैर्दिनैः सप्तभिः, पुत्रं मित्रमिवाजनिष्ट विमलं प्राचीव तेजोनिधिम् ॥८४॥
तारुण्याश्रितविग्रहाः स्मरभरप्रोद्दामधामश्रियः, स्मेरद्वक्त्रसरोरुहा मणिमयालङ्काररोचिष्णवः ।
गायन्त्यस्तनयोत्सवे प्रमुदिता वामभ्रुवस्तीर्थकृ—ज्जन्मायातककुकुमार्य इव ता अत्यद्भुता भ्रेजिरे ॥ ८५ ॥

पुत्रोत्पत्त्या शाङ्खिकाः श्रेष्ठीपत्न्याः, प्रीताः सन्तो यौगपद्येन सद्यः ।
शङ्खद्वन्द्वं वादयामासुरुच्चैः, प्रत्यारावैः पूरयन्तो दिगन्तान् ॥ ८६ ॥

१ प्रतिकूलगामिन्याम्, २ प्रेरितः, ३ सूर्यम्.

द्वारे सूतिगृहस्य यूपमुसले पार्श्वद्वयेऽतिष्ठिपत्, काचिद्वृद्धकुलाङ्गना धवंवती शीलाञ्चिता पुत्रिणी।
ऊर्ध्वीकृत्य सुधारसैर्धवलिते सिन्दूरिकालङ्कृते, शङ्क बालकचारुकीर्तिसुकृते साक्षाद्यशस्तेजसी ॥ ८७ ॥
भद्रायाः श्रेष्ठिभार्यायाः, ज्ञात्वा पुत्रसमुद्भवम्। अह्नाय सुन्दरी धात्री, समुपेत्य स्मितानना ॥८८॥
राज्ञे विज्ञपयामास, श्रेणिकाय कृताञ्जलिः। स्वामिंस्त्वन्नगरे श्रेष्ठ-श्रेष्ठिनोऽस्य सधर्मिणी ॥ ८९ ॥
गोभद्रस्य विभावर्यां, गते यामद्वये सति। सर्वलक्षणसम्पूर्णं, सुखेन सुषुवे सुतम् ॥ ९० ॥
तस्मात्त्वं वर्द्धसे नाथ, जयेन विजयेन च। पौराणामुदयो योऽत्र, नृपस्याभ्युदयाय सः ॥ ९१ ॥
गर्भस्थस्याऽस्य पाथोधि—यात्रां तात उपागमत्। बान्धवास्तद्विधित्सन्त, उत्सवं भवदाज्ञया ॥९२॥
ततस्तस्यै ददौ तुष्टि-दानं श्रेणिकभूपतिः। तदाज्ञयोत्सवश्चक्रे, भद्रागोभद्रबान्धवैः ॥ ९३ ॥
प्राज्ञं दैवज्ञमाहूय, प्रवेश्य स्वगृहेऽथ ते। दत्त्वा ताम्बूलमप्राक्षु—र्बालकस्य शुभाशुभम् ॥ ९४ ॥
स बभाषे विभाव्याथ, लग्ने ग्रहबलाबलम्। शुभग्रहबले लग्ने, जातोऽयं पुण्यवाञ्छिशुः ॥ ९५ ॥
गम्भीरिमजिताम्भोधि-र्धीरताऽधरिताचलः। धीविधूतसुराचार्यो, वर्यचर्यो भविष्यति ॥ ९६ ॥
ततस्तैः पिञ्जरं कृत्वा, तदङ्गं कुङ्कुमद्रवैः। परिधाप्यातिमूल्यानि, वस्त्ररत्नानि सादरम् ॥ ९७ ॥
कण्ठे पुष्पस्रजं क्षिप्त्वा, दत्वा ताम्बूलमुल्वणम्। देवतैर्वाचितस्तुष्टो, निजं धाम जगाम सः॥९८॥युग्मम्॥

१ भर्तृमती. २ पुत्रवती. ३ शीघ्रम् ४ विधातुमिच्छन्ति.

शिशोराराधनायेवा—दितीऽपि स्वाम्बुजच्छदैः । लक्ष्म्येव निर्मिता भाति, द्वारे वन्दनमालिका ९९
दत्त्वा कल्याणपात्राणि, पूर्णपात्राणि सादरम् । पुरेभ्याः प्रेषयामासुः स्ववधूर्निजवेश्मतः ॥ १०० ॥
ताः पुनः पुररथ्यासु, प्रमोदभरनिर्भराः । लीलाञ्चितं सञ्चरन्त्यः, सर्वाभरणभूषिताः ॥ १ ॥
विहितादभुतनेपथ्या, रणक्कणितनूपुराः । स्वरूपनिर्जितानङ्ग—कान्ताश्चन्द्रसमाननाः ॥ २ ॥
यूनां मनसि कुर्वाणाः, किं लावण्यापगा इमाः । देवता इति सन्देहं, प्रापुर्गोभद्रमन्दिरम् ॥ ३ ॥ त्रिभिर्विशेषकम् ॥
आदायाक्षतपात्राणि, तासामास्यानि कुकुमैः । पिञ्जराणि विधायोच्चै—र्दत्त्वा ताम्बूलमद्भुतम् ॥४॥
तैः प्रहस्य विसृष्टास्ता, विस्मयस्मेरमानसाः । श्रृंगारसागरज्योत्स्नाः, प्रापुः स्वं स्वं निकेतनम् ॥५॥ युग्मम् ॥
विज्ञातपुत्रजन्मानः, स्वशालाभ्यः प्रमोदिनः । प्रोद्दामगतिभिः सार्धं, सहर्षैस्तुरगैरिव ॥ ६ ॥
उच्चैः स्वरं घोषयन्तस्तैश्छात्रैः[1] स्तुतिमातृकाम् । ययाश्रुतिमुपाध्याय—कुञ्जराः समुपाययुः ॥७॥युग्मम्॥
क्षिप्त्वा छात्रोत्तमांगेषु, तैलं मङ्गलहेतवे । कुंकुमेन समालिप्तास्ताम्बूलवसनार्चिताः ॥ ८ ॥
सुधियस्तेऽप्युपाध्यायाः सचट्टास्तुष्टिभाजनम् । यक्षवत्सपरीवारा, जग्मुः शालां निजां निजाम् ॥ ९ ॥ युग्मम् ॥
कथित्वा नव्यकाव्यानि, सप्रभाः काव्यवत् क्वचित् । अप्रतिस्खलितं प्रोच्चैः, पेठुर्मङ्गलपाठकाः ॥१०॥
क्वचित्कस्तूरिकादष्टः(क्लृप्त)—स्थासकालङ्कृतालिकाः । जगुः कर्णामृतस्यन्दि गायनाः किन्नरा इव ११

[1] छात्रैः

परिस्फूर्जत्प्रतिध्वानैः, पूरयन्तीव रोदसी । युगपद्वादयामासु-र्वर्यतूर्याणि तौर्यिकाः ॥ १२ ॥
क्वचिद् गृहवहिर्भूमि—प्रदेशेषु सुगन्धिभिः । जलैः सिक्तेषु मुक्तेषु भूयसा रजसाभितः ॥ १३ ॥
शल्योज्झितेष्ववक्रेषु, सर्वत्राऽविषमेषु च । सर्वसङ्गविमुक्तानां मुनीनां मानसेष्विव ॥ १४ ॥
पट्टपाटपदिष्ठे तु (?) मृदङ्गे मंजु गुञ्जति । मन्दिरोद्यानमायूर-ताण्डवाडम्बराम्बुदे ॥ १५ ॥
जिनसन्मुनिसद्भूत-गुणोत्कीर्तनपूर्वकम् । मन्द्रतारतरोद्गानै-र्युगपद्दत्ततालिकाः ॥ १६ ॥
नानावेषजुषो योषा, भूरिभूषणभूषिताः । अकार्षुर्मण्डलीनृत्यं, हर्षोत्कर्षपुषो मिथः ॥१७॥पञ्चभिःकुलम्
भद्रा कल्पलतेवादा-दर्थिभ्यो दानमद्भुतम् । इयं लोकस्थितिर्दीन-मव्ययं पुत्रजन्मनि ॥ १८ ॥
गीतैर्मङ्गलपाठक प्रपठनैश्चट्टोद्भटोद्घोषणै—र्भ्राम्यद्वामविलोचनाजनरणन्मञ्जीरमंजुक्वणैः ।
दीनानाथवनीपकार्थनरवैस्तूर्यस्वनैश्चोध्धुरैः । शब्दाद्वैतमिवाभवज्जनिमहे सूनोस्तदा श्रेष्ठिनः ॥१९॥
एकादश दिनानित्थं, क्रमेण व्यतिचक्रमुः । कुर्वतामुत्सवं तेषां, प्रमोदादेकयामवत् ॥ २० ॥
ततोऽह्नि द्वादशे कृत्वा, सूतकस्य विशोधनम् । बभूवुः शुचिभूतास्ते, स्नानकर्मादिपूर्वकम् ॥२१॥
प्रविधायार्हतां स्नात्रं, वस्त्रस्रक्चन्दनादिभिः । भद्रा सर्वेषु चैत्येषु विधिनाऽर्चामचीकरत् ॥ २२ ॥
तत्पुरो बलिमाधाय, भक्त्या देवानवन्दत । विधाप्य प्रेक्षणं रम्यं, साधुपाश्रयमाययौ ॥ २३ ॥

१ आकाशपृथिव्यौ. २ 'पटिष्ठेत्तर्मुद' प्रत्यन्तरपाठोऽपि न सम्यग्ज्ञायते. ३ सुन्दरदीर्घतरगानैः ४ स्त्रियः ५ वामविलोचना मनोहराक्ष्यः स्त्रिय इति यावत्. ६ वनीपका भिक्षुकाः ७ जन्मोत्सवे ८ एकप्रहरवत्.

वन्दित्वा सुव्रतान् सूरीन् , भद्राऽवोचत्कृताञ्जलिः । प्रसद्य भगवन् क्षिप्र—मास्माकीने निकेतने २४
प्रासुकस्यैषणीयस्य, स्वजनार्थं कृतस्य च । जिघृक्षयाऽन्नपानादेः, प्रेष्यन्तां यतिपुङ्गवाः ॥२५॥युग्मम्॥
धर्मलाभं वितीर्योचु—स्ते भद्रे तव मन्दिरे । वर्तमानेन योगेनाऽऽ—गमिष्यन्त्येव साधवः ॥२६॥
सूरीन् प्रणम्य साध्वीश्च, न्यमन्त्रयत कोविदा । भक्त्या हृष्टमना भद्रा, श्रावकाणां क्रमो ह्ययम्॥२७
सधवाभिर्महेलाभि—र्गायन्तीभिः समन्विता । शङ्खे स्वनति गम्भीरे, वाद्यमाने च तूर्यके ॥ २८ ॥
सलीलगमना पत्नो—त्सङ्गविन्यस्तबालका । भद्रा प्राप निजं धाम, द्वारविन्यस्ततोरणम् ॥२९॥युग्मम्॥
मित्रज्ञातिपुरज्येष्ठा, भोजनाय निमन्त्रिताः । भद्रया सादरं तेऽपि, समाजग्मुस्तदैव हि ॥ ३० ॥
विष्टरेषु प्रधानेषु, ते क्रमेणोपवेशिताः । भाजनानि च सर्वेषां, सा प्रत्येकमदीदपत् ॥ ३१ ॥
तदर्थं सूपकलम—शालिप्रभृति भोजनम् । सर्पिः सुगन्धि बंहीयो, वरशालनकानि च ॥ ३२ ॥
मृदुमण्डकवृन्दानि, नानापक्वान्नसंहतीः । मोदकान् खण्डखाद्यानि, विशालाः सुकुमारिकाः ॥३३॥
दध्नो दुग्धस्य तक्रस्य, संस्कृतस्य घनस्य च । दध्योदनस्य भाण्डानि, द्राक्षादेः पानकस्य च ॥ ३४ ॥
इत्यादि भक्तपानादि, तत्र भोजनमण्डपे । समुपाढौकयद्भद्रा, श्रेष्ठिनी विपुलाशया ॥ ३५ ॥
तस्मिंश्चावसरे तत्र, साधुयुग्मं समागमत् । दृष्ट्वा तन्मुमुदे भद्राऽ—म्भोधिवेलेव शीतगुम् ॥ ३६ ॥

१ ग्रहीतुमिच्छया २ प्रमदाभि ३ आसनेषु. ४ प्रभूततरम्. ५ चन्द्रम्.

अभ्युत्थानमथाधाय, सम्मुखीना ययौ ततः । शिरस्यञ्जलिसंश्लेषं, चकार विनयेन सा ॥ ३७ ॥
स्वयमासनमानीय, प्रभोऽस्मिन्नुपविश्यताम् । प्रसद्येति भणित्वा साऽऽसनं तत्पुरतोन्यधात् ॥३८॥
भक्त्या च वन्दनं कृत्वा, रोमाञ्चाञ्चितविग्रहा । प्रवर्द्धमानसच्चेतः—परिणामा सती सती ॥ ३९ ॥
सर्वदोषविशुद्धं त–द् गृहीत्वाऽन्नादि पुष्कलम् । प्रसद्य भगवन्नेत–द् गृह्यतामित्युवाच सा ।४०।युग्मम्।
द्विचत्वारिंशता दोषै—र्विशुद्धं तद्विभाव्य तौ । धारयामासतुः पात्रा–ण्येषणादत्तमानसौ ॥ ४१ ॥
निचिक्षेप ततस्तत्र, भक्तपानादिकं बहु । मुनीनामिच्छया भद्रा, प्रकृत्योदारमानसा ॥ ४२ ॥
तत्र विस्मयमानेषु समस्तेष्वपि बन्धुषु । मुदाऽनुमोदमानेषु, तामेवं पार्श्ववर्तिषु ॥ ४३ ॥
धन्या पुण्येयमस्याश्च, सुलब्धं जन्मजीवितम् । दानं यैवंविधा हृष्टा, सत्पात्रेभ्यः प्रयच्छति ।४४।युग्मम्
न केवलं स्वयं पुण्य—मर्जयन्ती तदा भृशम् । अन्येषामपि जन्तूनां, भव्यानां तत्र पश्यताम् ॥४५॥
विनयेनावनम्राङ्ग—यष्टिः श्रेष्ठिसधर्म्मिणी । अवन्दत पुनर्भक्त्या, वाचंयमशिरोमणी ॥४६।युग्मम्॥
समादाय ततो भक्त—मीर्यासमितिसङ्गतौ । गन्तुं प्रवव्रृताते तौ, राजहंसाविवामलौ ॥ ४७ ॥
भद्रापि श्रेष्ठिनी भक्त्या, तौ मुनी बहुमानतः । कियन्तमपि भूभाग—मनुगम्य न्यवर्त्तत ॥ ४८ ॥
षोढा सत्कारमाधाय, साध्वीभ्योऽपि प्रमोदतः । दानं दत्त्वाऽनुगम्याथ, बान्धवादीनभोजयत् ॥४९॥

१ षोढा सत्कारोऽयं पूर्वोक्त १३७-१३८-१३९ श्लोकषु द्रष्टव्यः

भुक्तोत्तरं च सर्वांस्तान्, कृताचमनकर्मणः । शुचिभूतांस्ततः श्रेष्ठि-भार्यैकत्रोपवेश्य च ॥ ५० ॥
यथौचित्येन सत्कृत्य, ताम्बूलवसनादिभिः । श्रेष्ठिनी समुवाचैवं, कृत्वोत्संगे निजं शिशुम् ५१युग्मम्
मम कुक्षौ समुत्पन्नो, यदायं बालकस्तदा । पुष्पितं फलितम् शालि-क्षेत्रं भद्राभिसूचकम् ॥ ५२ ॥
स्वप्ने दृष्ट्वा प्रबुद्धास्मि, गुरुदेवप्रसादतः । शालिभद्राभिधस्तस्मा-दस्त्वयं सान्वयः शिशुः॥५३युग्मम्॥
ततो भद्राभिधायैवं, नामाधानमहोत्सवं । लालनाय स्वपुत्रस्य, धात्रीः पञ्च न्यधादसौ ॥ ५४ ॥
लब्धपत्या बहुक्षीरा, बलिष्ठा रोगवर्जिता । हितैषिणी सदा सूनो-र्बभूव स्तनदायिनी ॥ ५५ ॥
नवनीतमृदुस्पर्शाऽ-मलपाणिपादाम्बुजा । अङ्गसंवाहना दक्षा-ऽभवन्मज्जनकारिका ॥ ५६ ॥
विचित्रचित्रविच्छित्ति-कर्मकौशलशालिनी । लघुहस्ता विदग्धाऽऽसी-त्प्रसाधनविधायिनी ५७
मंजुलालापिनी नाना-देशभाषाविशारदा । चारुक्रीडनकाऽभिज्ञाऽभवत्क्रीडाविधायिनी ॥ ५८ ॥
शिरीषपुष्पमृद्वङ्गी, सुसंस्थानाङ्गसङ्गता । स्थिरात्मनसनाथाऽऽसी-द्बालकोत्सङ्गधारिणी ॥ ५९ ॥
यथावसरमेवैता, लालयन्ति स्म बालकम् । बालत्वे शक्रसन्दिष्टा, अर्हन्तमिव देवताः ॥ ६० ॥
इतश्च श्रेष्ठिगोभद्रः, समुद्रे पोतमाश्रितः । गच्छन्संप्राप गम्भीरं, यावन्नक्राकुलं जलम् ॥ ६१ ॥
तावद्दैवस्य वैषम्या-दनित्यत्वाच्च वस्तुनः । निमित्तादेर्विसंवादा-दुत्पाता बहवो भवन् ॥ ६२ ॥

१ विच्छित्ति. रचना. २ पण्डिता ३ अलङ्कारकारिका.

कथम्?–उत्तालहस्तविक्षेपैर्नन्तुर्दिवि देवताः । तर्जयन्त्य इवाम्भोधौ, वणिजः पोतमाश्रितान् ॥६३॥
अकस्मादेव भूयस्यो, दिवाप्यम्बरमण्डलात् । ज्योतिर्विमानखण्डाभाः, पेतुरुल्काः समन्ततः ॥६४॥
तदा रजःस्वलात्वेन, समस्ता विदिशो दिशः । बभूवुर्मलिनाः सद्यो, वणिगक्षेमसूचिकाः ॥ ६५ ॥
धूमकेतुमिव श्यामं, खेऽभ्रखण्डमरिष्टकृत् । दृष्ट्वा सांयात्रिकाश्चित्ते, चुक्षुभुर्भ्रमितेक्षणाः ॥ ६६ ॥
विदधद्गाढमुत्कम्पं, तेषामुत्पश्यतामपि । वितंस्ताराभ्रखण्डं त–त्तत्साध्वसमिव क्षणात् ॥ ६७ ॥
जगर्ज जलदस्तेषां, हृदयं स्फोटयन्निव । मत्तद्विप इव क्रुद्धः, पोतंप्रतिगजेक्षणात् ॥ ६८ ॥
तन्मध्ये प्रास्फुरच्छम्पा–ऽवदाता चञ्चला मुहुः । अस्थैर्यं सूचयन्तीव, समुद्रोद्भवसम्पदाम् ॥ ६९ ॥
क्षोभयन्तः समुद्राम्भः, पातयन्तस्तटद्रुमान् । प्रतिकूलाः समन्ताच्च, प्रचण्डा वायवो वव्रुः ॥ ७० ॥
वातैः प्रक्षुभितादब्धे–रुच्छलन्ति स्म वीचयः । वज्रघाताहता दीर्घाः, स्फटिकाद्रेः शिला इव ॥७१॥
नौर्भङ्गैस्ताडितोत्पात–निपातौ कुर्वती दधौ । कुट्टिमे करघातेनो–च्छलत्कन्दुकविभ्रमम् ॥ ७२ ॥
खेचरी सिद्धविद्येव, क्वचिदुत्पुप्लुवे भुवः । सा पपाताम्बराभोगा–द्भ्रष्टविद्येव कुत्रचित् ॥ ७३ ॥
पलायिष्ट क्वचित्तार्क्ष्य–भीतेव भुजगाङ्गना । महाजनरवत्रस्ता, दधावाश्वेव सा क्वचित् ॥ ७४ ॥
अनतिव्यक्तसूत्कारं, कामं शब्दायते स्म सा । क्वचिद् गुरुजनैर्दृष्ट–व्यलीकेव कुलाङ्गना ॥ ७५ ॥

१ धूलियुक्तत्वेन, २ विस्तारं प्राप. ३ लघुप्रतिगजनिरीक्षणात्. ४ विद्युत. ५ तरङ्गाः ६ तरङ्गैः ७ बद्धभूमितले. ८ गरुडाद्-भीता सर्पिणीव ९ दृष्टं कुकर्म यस्याः

क्वचित्सा पीतमद्येव, जुघूर्णवातिवेगतः । निरालम्बा निराधारा, पपाताम्बरतः क्वचित् ॥ ७६ ॥
क्वाप्यम्भोग्रन्थिभेदेन, प्रगलज्जलबिन्दुभिः । नवोपरतकान्तेव, स्थूलाश्रूणि मुमोच सा ॥ ७७ ॥
नौरन्तस्थजनाक्रन्दै—र्विलापानकृत क्वचित् । परराजचमूचक्रा—क्रान्तेवेह महापुरी ॥ ७८ ॥
सशोकलोकसम्पर्का—च्छुशोचेव कदापि सा । क्षीणपूर्वार्जितश्रेयो—निचयेव सुराङ्गना ॥ ७९ ॥
नावमेवं समालोक्य, तदन्तर्वर्त्तिभिर्नरैः । भयोद्भ्रान्तमनोनेत्रैः, स्मर्यन्ते स्मेष्टदेवताः ॥ ८० ॥
असारं तत्र भाण्डञ्च, कैश्चिदाक्षिप्यताम्बुधौ । प्रक्षेपबलिरम्भोधि—देवीभ्य इव यत्नतः ॥ ८१ ॥
अधोमुखाः प्रलम्ब्यन्ते, नांगराः स्माभितो नरैः । यानपात्रात्पयोराशौ, घण्टा इव मतङ्गजात् ॥८२॥
मुकुन्दस्कन्दरुद्राणी—क्षेत्रपालादिदेवताः । उपायाच्यन्त कैश्चिद्धि, योजिताञ्जलिसम्पुटैः ॥ ८३ ॥
तथापि प्राप्य कूटस्य, संसर्गं दैवयोगतः । सद्यो विजघटे पोतो, विधुरे दुर्जनो यथा ॥ ८४ ॥
भग्ने पोते सध्वजेन, कूपकेनाप्यभज्यत । छिन्ने मूले द्रुमाग्रेण, स्थीयते किं सवीरुधा ॥ ८५ ॥
भाण्डं ममज्ज निश्शेषं, वणिग्भिः सममम्बुधौ । किं निराधारमाधेय—मेवमेवावतिष्ठते ॥ ८६ ॥
तदा च पोतभङ्गेन, भयादाकुलमानसः । सम्यक्त्वं मलिनीकृत्य, वैचित्र्यात्कर्मणां गतेः ॥ ८७ ॥
पञ्चत्वं श्रेष्ठिगोभद्रः, प्राप्याकूपारवारिणि । भवनाधिपदेवेषु, देवंभूयमुपाययौ ॥ ८८ ॥

१ सद्योमृतपतिका २ कष्टे. ३ लतासहितेन. ४ अकूपारः समुद्रः ५ देवत्वमित्म्.

ततश्च सोऽवधिज्ञान-प्रयोगमकरोत्तदा । यावदम्भोधिमध्ये स्वं, भिन्नपोतमबुध्यत ॥ ८९ ॥
तरन्तं चैक्षताम्भोधौ, कायं मीनमिव स्वकम् । ददर्श च गृहे भार्यां, प्रसूतोत्तमबालकाम् ॥ ९० ॥
मुनिदानार्जितागण्य—पुण्यावर्जितचेतसः । तस्य प्रादुरभूत्स्नेहो, महीयानङ्गजे निजे ॥ ९१ ॥
अत्रान्तरे च भद्रायाः, केनाप्येत्य निवेदितम् । गोभद्रः पञ्चतामाप्तः, पोतभङ्गेऽम्बुधाविति ॥ ९२ ॥
वचसा तेन सा सद्यः, पपात भुवि मूर्छिता । दष्टा भुजङ्गमेनेव, कालदारुणमूर्तिना ॥ ९३ ॥
बन्धुभिर्लम्भिता सञ्ज्ञां, प्रयोगैश्चन्दनादिभिः । नरेन्द्रैरिव सद्योगै—र्महामन्त्रौषधादिभिः ॥९४॥
ततश्च विललापैवं, भद्राऽतिकरुणस्वरम् । त्वया किं मे हृतो भर्ता, रे दैवात्यन्तनिर्घृण ॥ ९५ ॥
हा नाथ रजनीनाथ—वदानन्दप्रदायिनः । अकाण्डमृत्युस्ते कोऽयं, सर्वस्यापि भयङ्करः ॥ ९६ ॥
ममोपरि कृपा नास्ति, यदि ते क्रूरकर्मणः । रे दैव तत्किमेनस्मिन्, बालकेऽपि न विद्यते ॥ ९७ ॥
मुक्तकण्ठं महाक्रन्दं, साश्रुपातं च कुर्वती । श्रेष्ठिनी पातयामास, बन्धून् शोकमहार्णवे ॥ ९८ ॥
अन्येषामपि बन्धूनां, प्रत्येकं क्रन्दनात्तदा । रसान्तरतिरस्कारि—शोकाद्वैतमिवाभवत् ॥ ९९ ॥
अर्हच्चक्रिबलारराति—बलाच्युतमुखा अपि । हतकेन कृतान्तेन नीयन्तेऽन्तं ह हा हठात् ॥ ॥२००
अकस्मादापतत्येष, मृत्युः सर्वशरीरिणाम् । अतः सद्धर्म्मकर्म्मैव, सदा कार्यं विवेकिभिः ॥ २०१ ॥

---

१ विषवैद्यैः २ बलारातिः इन्द्रः. ३ अच्युतो वासुदेवः.

इत्थं कथयता बन्धु—वर्गेण प्रतिबोधिता । लौकिकाचारमखिलं, बन्धुभिः सह साकरोत् ॥ २०२ ॥
सद्धर्मनिरता सर्व्वं, गृहकार्यं च कुर्वती । कियत्यपि गते काले, शोकं स्तोकीचकार सा ॥ २०३ ॥
इतश्च ववृधे शालि–भद्रोऽपि निजमन्दिरे । कल्पशाखीव हेमाद्रि–कन्दरे निरुपद्रवम् ॥ २०४ ॥
सञ्चचार स बन्धूना–मङ्कादङ्कं निरन्तरम् । वर्षन्नङ्गेषु सर्वेषां, संस्पर्शेन सुधामिव ॥ २०५ ॥
धात्रीभिर्लाल्यमानं तं, वर्द्धमानमहर्निशं । मूर्त्तिमन्तमिव स्वार्थ–मपश्यन् बान्धवा मुदा ॥ २०६ ॥

सुसाधुदानार्जितपुण्यपुण्या–कृष्टः सदास्य व्यतनोदभीष्टम् ।
गोभद्रजीवामर एत्यभाग्य—युक्तस्य देवा अपि किङ्कराः स्युः ॥ २०७ ॥

इति श्रीधन्यशालिभद्रमहर्षिचरिते राजगृहे राजश्रेष्ठिमालिककन्यासोमश्रीसुन्दरीकुसुमावलीजन्मसखीभाव–शालिभद्रोत्पत्तिगोभद्रश्रेष्ठिसमुद्रारोहणप्रवहणभङ्गदेवत्वावाप्तिपुत्रानुकम्पनाभीष्टकरणव्यावर्णनो नाम द्वितीयः परिच्छेदः ॥ २ ॥



## ॥ अथ तृतीयः सर्गः प्रारभ्यते ॥

अथेभ्यश्रेष्ठिमूर्धन्यः, कृषीवलमदोऽवदत् । पुरं राजगृहं गन्तु—मिच्छाम्यस्मि महामते ॥ १ ॥
ततः कृषीवलेनापि, सतूर्णं जगृहे धनुः । धन्येनापि निजं खड्ग—रत्नमुल्बणमाददे ॥ २ ॥
तेनानुगम्यमानोऽसौ, देशसन्धिमुपागतः । धन्यो निवर्त्तयामास, कर्षकं स्वगृहं प्रति ॥ ३ ॥
चचाल स्वयमेकाकी, निर्भयः स महामनाः । प्राप कुसुमपालस्या—रामं राजगृहाद्बहिः ॥ ४ ॥
यावत्तत्र क्षणं सोऽस्थात्तावत्तद्नुभावतः । बभूवोपवनं रम्यं, दलपुष्पफलादिभिः ॥ ५ ॥
आगात् कुसुमपालाख्य—स्तत्रैवोद्यानपालकः । ददर्श यावदाराम—मकस्मादतिबन्धुरम् ॥ ६ ॥
ततोऽसौ विस्मयापन्न—श्चिन्तयामास चेतसि । आश्चर्यं यदिहाकस्मा—दभूदाराम रम्यता ॥ ७ ॥
ततश्चखान स क्षोणौ, स्थानकानि कियन्त्यपि । यावद् द्रूणां रोपणाया—पश्यत्तावन्महानिधीन्॥८॥
ततोऽचिन्तयदेवं स, पूर्वमेवाखनं क्षितिम् । निध्यालोकः परं नाभू—त्तत्किं कारणमित्यहो ॥ ९ ॥
एवं चिन्तयतस्तस्य, धन्यः श्रेष्ठिसुतः पुरः । अपतच्चक्षुषोर्मार्गे, पुण्यराशिरिवाङ्गवान् ॥ १० ॥
उद्यानपालको धन्य—मानन्दस्यन्दिनं दृशोः । विलोक्य हृदये प्रीत—श्चिन्तयामासिवानिति ॥११॥
अयं गुणनिधिः कश्चि—दित्याऽऽकृत्याऽवसीयते । यत्राकृतिर्गुणास्तत्र, वसन्तीति श्रुतिर्यतः ॥१२॥

---

१ अहम्

नूनमस्य प्रभावोऽयं, यदारामस्य रम्यता । यन्निधानोपलम्भश्च, किं किं पुण्याद्भवेन्न हि ॥ १३ ॥
इति सञ्चिन्त्य हृष्टोऽसौ, धन्याभ्यर्णमुपाययौ । पप्रच्छ कुशलोदन्तं, स्वागतालापपूर्वकम् ॥ १४ ॥
कस्याद्यातिथयो यूयं, नगरेऽस्मिन्भविष्यथ । ततो युष्माकमेवेति, श्रेष्ठिसूनुस्तमब्रवीत् ॥ १५ ॥
तदाहं भाग्यवान्नूनं, यद्यागच्छसि मद्गृहम् । किमपुण्यवतो धाम्नि, कल्पवृक्षः प्ररोहति ॥ १६ ॥
तस्मात्प्रसादमाधाय, ममोपकृतिकाम्यया । निजपादप्रसङ्गेन, पवित्रीकुरु मे गृहम् ॥ १७ ॥
एवमभ्यर्थितो यत्ना—तेन सार्द्धं चचाल सः । सन्तो हि प्रार्थनाभङ्गं, कुर्वते न कदाचन ॥ १८ ॥
गच्छन्नसौ सरांस्युच्चैः, सपद्मान्यमलानि च । ऐक्षिष्टालब्धमध्यानि, मनांसीव महात्मनाम् ॥ १९ ॥
क्वचित्पुष्करिणीर्धन्यो, नानाविभ्रमबन्धुराः । नितम्बिनीरिवापश्य—च्चञ्चचारुपयोधराः ॥ २० ॥
उद्यानालीः क्वचित्कान्ता, बहुधा विटपीडिताः । स पण्यरमणीश्रेणी—रिवापश्यत्सकौतुकम् ॥ २१ ॥
नानारत्नसुवर्णादि—पूर्णा हट्टपरम्पराः । धनदश्रीगृहश्रेणी—रिवाद्राक्षीत्स बन्धुराः ॥ २२ ॥
धनिनां रम्यहर्म्याणि, तुङ्गानि विपुलानि च । सोऽपश्यद्भवनाधीश—भवनानीव शोभया ॥ २३ ॥
सोऽर्हच्चैत्यानि तुङ्गानि, चन्द्रांशुविशदानि च । ददर्श कीर्तिकूटानि, प्रीतस्तत्कारिणामिव ॥ २४ ॥
दिवो देव्यः किमायाताः, किमम्बूरसुराङ्गनाः । इत्यपश्यत्स पूर्नारी—र्वैर्यसौन्दर्यशालिनीः ॥ २५ ॥

१ इन्द्रपुत्रः २ स्त्रीपक्षे पयोधरौ स्तनौ, वापीपक्षे पयांसि जलानि धरन्तीति ता. ३ उद्यानश्रेणीः वृक्षैरीडिताः शोभिता, पणाङ्गनाश्च विटैर्जारैः पीडिता आश्लिष्टाः ४ वैश्याश्रेणीः

सुवेषाकृतिसंस्थानान्, सोऽपश्यन्नूनलङ्कृतान् । दिवः समागतान् देवा-निव द्रष्टुं पुरश्रियम् २६
पश्यन्नेवं पुरं रम्यं, भ्रष्टस्वःखण्डसन्निभम् । समं कुसुमपालेन, धन्यस्तद्गेहमाययौ ॥ २७ ॥
ततः कुसुमपालोऽपि, प्रोवाच प्रेयसीं निजाम् । प्रिये प्राघूर्णकः पुण्यवानयं गुणवानिति ॥ २८ ॥
अतः स्नानादिकां काय-स्थितिमेनं महामतिम् । कारयित्वा महल्या च, प्रतिपत्याशु भोजय।२९।युग्मम्
घकुलश्रीस्ततो हृष्ट-चित्ता धन्यस्य सर्वदा । सर्वं सम्पादयामास. मातेवात्यन्तवत्सला ॥ ३० ॥
अचिन्त्यधामा निश्चिन्त—मानसः प्रीतिनिर्भरः । तत्रैवेभ्यसुतस्तथौ, स स्वकीय इवौकसि ॥३१॥
इतश्च तत्र सोमश्री—सुन्दरीकुसुमावलीः । श्रेणिकावनिपश्रेष्ठिगोभद्रारामिकाङ्गजाः ।' ३२ ॥
कलाकलापं सकलं, पाठयित्वा कलागुरुः । श्रेणिकायार्पयामास, विचक्षणशिरोमणिः ॥३३॥युग्मम्
भूरिस्वर्णमहारत्न-वरेण्यवसनादिभिः । भूषयित्वा कलाचार्यं, विससर्ज नराधिपः ॥ ३४ ॥
अतिस्निग्धा वयस्यास्ता-स्तिस्रोऽपि हि परस्परम् । क्रीडन्त्येकत्र तिष्ठन्त्यः, प्रायो विविधखेलनैः ३५
यौवनाभिमुखास्तिस्रोऽ—प्यन्यदैकत्र संस्थिताः । परस्परावियोगाय, प्रतिज्ञामिति चक्रिरे ॥३६॥
एकोऽस्माभिर्विधातव्यो, भर्ता स्वस्यावियुक्तये । सुखेनैकत्र तिष्ठामो वयं येन परस्परम् ॥३७॥
एवं कृतप्रतिज्ञास्ताः, पूर्यमाणमनोरथाः । मनःसङ्कल्पमात्रेण, तस्थुर्दैव्य इवावनौ ॥ ३८ ॥
धन्यः कुसुमपालस्य, गृहे तिष्ठन् कलानिधिः । नानाप्रकारभङ्गीभि—र्जग्रन्थ कुसुमस्रजः ॥३९॥

मालावैचित्र्यमालोक्य, मुदिता कुसुमावली । ददौ नीत्वा सखीभ्यां ता, रणद्भृङ्गकुलाकुलाः ४०
मालानां गुम्फनं दृष्ट्वा—ऽदृष्टपूर्वमिवाद्भुतम् । पप्रच्छतुस्ततस्तां ते, केनैताः सखि निर्मिताः ४१
सा जगाद गृहेऽस्माकं, धन्याख्योऽस्त्यागतोऽतिथिः । तेनैताः निर्मिता सख्यौ, विचित्रा कुसुमस्रजः ॥
सख्यौ स गुणरत्नानां, साक्षान्निधिरिवाक्षयः । चारुगम्भीरिमाम्भोधि—र्धीरताधरिताचलः ४३
वदान्यतागुरुर्धीमान्, सौभाग्यामृतसागरः । अगण्यपुण्यलावण्या—कीर्णकायो महाभुजः ४४
लोचनानन्दनिस्यन्दी, शारदश्चन्द्रमा इव । तरुणस्तरुणीस्वान्ता—म्भोजोज्जृम्भणभास्करः ४५
स्वर्णचूर्णवपुर्वर्णः, श्लाघ्यसर्वाङ्गसंस्थितिः । इहानङ्गोऽङ्गवानङ्ग—रूपेण स विभाव्यते ॥ ४६ ॥ चतुर्भिश्च कुलकम् ॥
सोमश्रीः सुन्दरी चाथ, तद्गुणश्रवणेन्दुना । प्रोल्लासितमनोऽम्भोधी, सानुरागे जजल्पतुः ४७
सखि धन्या त्वमेवैका, दृष्ट्या दृष्टो यया ह्यसौ । प्राप्यते किमपुण्येन, मरौ पद्मसरः क्वचित् ४८
धन्ये जातानुरागाथ, सोमश्रीर्गुणरागिणी । रतिं न लभते क्वापि, शफरीव स्थलङ्गता ४९
नैच्छदाहारमाधातुं, न पातुं पानकाद्यपि । नालङ्कर्तुमलङ्कारान, सा स्मरव्याधिबाधिता ५०
न स्नानं नाङ्गसंस्कारं, विधातुमुदयच्छत । परं स्वेदमुवाहाङ्गे, कम्पं मुमोच निरन्तरम् ५१
मुमोचोच्छवासनिःश्वासा—नत्युष्णान् शोषकारिणः । बाष्पप्लुतेक्षणा तल्पे, पतति स्मातिनिः सहा
सखीभिर्बहुधोक्तापि, जजल्प न च किञ्चन । प्रोज्जल्पति तदा शून्य—मसम्बद्धास्फुटाक्षरम् ५३

तामेवं कन्यकां धात्री, विलोक्याकुलमानसा । तत्र चैकान्तमाधाया—पृच्छन्मधुरया गिरा ॥५४॥
कोऽपि किं बाधते व्याधि—र्वत्सेऽतुच्छस्तवाधुना । किं वान्यत्कारणं किञ्चि—द्येनैवं पुत्रि खिद्यसे ॥५५॥
अकस्मादेव ते कस्मा—दवस्थाऽभवदीदृशी । ममात्मनिर्विशेषायाः, पुरस्ताद् ब्रूहि बालिके ॥ ५६ ॥
सर्व्वं सम्पादयिष्यामि, तवाभीष्टं क्षणादपि । अविज्ञातरुजः कर्त्तुं, पार्यते न प्रतिक्रियाम् ॥ ५७ ॥
सोमश्रीस्तामुवाचैवं, विहस्याकर्णयाम्बिके । न व्याधिर्बाधते कोऽपि, हेतुर्नान्योऽस्ति केवलम् ॥५८॥
ममाद्य पुरतो धन्या—भिधो धीमान् गुणी युवा । अतिथिः कुसुमावल्या, वर्णितः स्वगृहागतः ॥५९॥
तद्गुणश्रवणात्तस्मि—न्ननुरागोऽम्ब मेऽभवत् । तदप्राप्तावसुस्थाहं, त्वं प्रमाणमतः परम् ॥ ६० ॥
ततः सा प्रत्युवाचैवं, त्वं खेदं पुत्रि मा कृथाः । यतिष्येऽहं तथा शीघ्रं, यथेष्टं ते भविष्यति ॥६१॥
इत्युदित्वा च धारिण्यै, सा तदाकूतमब्रवीत् । तत्सर्व्वं धारिणी देवी, श्रेणिकाय व्यजिज्ञपत् ॥६२॥
ततः श्रीश्रेणिको राजा, कौतुकोत्तानमानसः । धन्यमाजूहवत्प्रीत्यो—द्यानपालस्य मन्दिरात् ॥ ६३ ॥
धन्यस्यागच्छतो रूप—मालोक्याचिन्तयन्नृपः । किं जयन्तोऽयमेतीन्द्र—पार्श्वात्केनापि हेतुना ॥६४॥
किंवा नागकुमारोऽय—मायाति पृथिवीतलात् । नित्यान्धकारसम्पूर्णे, तत्र स्थातुमिवाक्षमः ॥६५॥
धन्योऽप्यभ्यर्णमागत्य, प्राञ्जलिः प्राणमन्नृपं । महाकुलीना विनया—लङ्कारा हि निसर्गतः ॥ ६६ ॥

१ इन्द्रपुत्रः.

ततः कुसुमपालेन, विज्ञप्तो मगधाधिपः । सहागतेन धन्योऽयं, स्वामिन्नमति सादरम् ॥ ६७ ॥

ततो नृपुङ्गवश्चित्ते—ऽचिन्तयन्मम पुत्रिका । स्थानेऽनुरागमाधत्ते, पद्मिनीव प्रभाकरे ॥ ६८ ॥

रूपमप्रतिमं ह्यस्य, देहसौन्दर्यमद्भुतं । तन्नूनमस्य सोमश्रीः, योग्या श्रीः श्रीपतेरिव ॥ ६९ ॥

निश्चित्येति निजे चित्ते, धन्यमाह नरेश्वरः । त्वं विवाहय मत्पुत्री—मायुष्मन्नतिसुन्दरीम् ॥ ७० ॥

धन्योऽभ्यधात्सुधां श्रुत्योः, स्यन्दमान इव प्रभो । युष्माक वचन केन, पार्यते कर्त्तुमन्यथा ॥ ७१ ॥

किन्तु ॥ जातिर्विशुद्धे हि कुलं विशालं, रूप मनोहारि सुचारु शीलं ।
विद्यानवद्या च गुणा वरस्य, स्युः श्लाघनीया क्षितिपाधिनाथ ॥ ७२ ॥
एषां च मध्याद्भवतां न कोऽपि, गुणो मदीयः प्रवरः प्रतीतः ।
अतः कथं मे स्वसुताप्रदान—मज्ञातपूर्व्वाय विधीयतेऽत्र ॥ ७३ ॥

धन्यं प्रति प्राह ततो धराधिपस्त्वया प्रक्लप्तं वरपुष्पगुम्फनम्। दृष्ट्वानुरागानुगताऽभवत्त्वयि, प्रदीयते तुभ्यमतः सुता मया ७४
यच्चोच्यतेऽज्ञातगुणाय मह्यं, किं दीयते स्वाङ्गरुहेति वाक्यम्। तत्राकृतेर्ज्ञायत एव पुंसां, प्रायो गुणौघः सुकुलं च तस्मात् ७५
तस्मान्मयेमां परिदीयमाना—मङ्गीकुरु त्वं गुणरत्नसिन्धो । भवद्गुणाकर्णनजातरागां, यथैव रामो जनकस्य पुत्रीम् ॥७६॥
इत्युक्तोऽसौ नरेन्द्रेण, तूष्णीमालम्ब्य लज्जया । स्थितः शालीनता येन, पुंसां प्रवरभूषणम् ॥ ७७ ॥

१ सूर्ये. २ कृष्णस्य. ३ कर्णयोः ४ पुत्री. ५ गुणसमूहात्. ६ लज्जालुता

ततस्तदैव दैवज्ञो, राज्ञा विज्ञानसागरः । उक्तः कन्याविवाहस्य, ब्रूहि मे लग्नवासरम् ॥ ७८ ॥
गणयित्वा ततः सोऽपि, जगाद नृपतेः पुरः । इतो दिनात्तृतीयेऽह्नि, विद्यते लग्नमुत्तमम् ॥ ७९ ॥
सर्वदोषविशुद्धेऽस्मिन्, लग्ने कन्यां विवाहय । ईदृग्लग्नं धराधीश, यतः पुण्यैरवाप्यते ॥ ८० ॥
ततस्तं तुष्टिदानेन, तोषयित्वा विसृज्य च । भूपतिः कर्तुमारेभे, पाणिग्रहमहोत्सवं ॥ ८१ ॥
अत्रान्तरे च विज्ञात—स्वकीयोद्वाहनिर्णया । धात्रीमुखेन सोमश्रीः, श्रेणिकाय व्यजिज्ञपत् ॥८२॥
तातास्माकं प्रतिज्ञाऽऽसी—त्सखीनां तिसृणामपि । पतिरेको विधातव्य, इति स्वस्यावियुक्तये॥८३॥
अयमेव पतिस्तस्मा—त्सख्योरितरयोर्यथा । भवेत्तथा प्रसीदेति, श्रुत्वा नृपतिरब्रवीत् ॥ ८४ ॥
यद्येवं रुचितं तस्या—स्तदाऽस्तु किमु दूषणम् । सपत्नीनामिह प्रेमा—तिशेते स्वर्गसम्पदम् ॥ ८५ ॥
भद्रां कुसुमपालं च, समाहूय नृपोऽभ्यधात् । युष्मदङ्गजयोः सोम—श्रियश्चैकोऽस्तु वल्लभः ॥८६॥
येनैकत्र सुखेनैवावतिष्ठन्ते परस्परम् । तौ ज्ञातपुत्र्यभिप्राया—वेवमस्त्वित्यवोचताम् ॥ ८७ ॥
ततो नैमित्तिकादिष्टे, वासरे स्वजनादिकान् । सत्कृत्य बहुमानेन, यथार्हं भोजनादिभिः ॥ ८८ ॥
शुभे लग्ने मुहूर्ते च, भद्रारामिकभूभृतः । इभ्याङ्गजेन कन्यानां, पाणिमग्राहयन्मुदा ॥ ८९ ॥युग्मम्॥
रत्नालङ्कारवस्त्रादीन्, कन्यकाभ्यां वराय च । ददतुर्विविधान् प्रीतौ, श्रेष्ठिन्युद्यानपालकौ ॥ ९० ॥
जामात्रे कन्यकाभ्यो नृपतिरपि ददौ स्वर्णकोटीश्चतस्रो, मुक्ताहारार्द्धहाराङ्गदमुकुटशिरोरत्नसत्कुण्डलादीन्

हस्त्यश्वस्यन्दनादीन् विविधजनपदोद्भूतदासी प्रभेदान्, प्रासादं सप्तभूमं स्खलितरविरथं चारुशालं विशालम् ॥ ९१॥
भूयोदेशभवं च किङ्करगणं पर्यङ्कशय्यासना—दर्शाच्छादनभाजनानि रुचिराण्यर्घ्योपधानानि च ।
मानागोकुलसंकुलान् वरतरान् प्राज्यप्रपुष्टान् व्रजान्, ग्रामानृद्धिसमृद्धलोककलितान् सुक्षेत्ररम्यान बहून् ।९२।आदियुग्मम्
असहायो विदेशस्थः, पुण्यात्प्रापमहं श्रियम् । तस्मात्पुण्यार्जने यत्नः, कर्त्तुं मे युज्यतेऽधुना ॥ ९३ ॥
अर्ज्यते च पुनः पुण्यं, गुरूणां पर्युपासनात् । गुरवोऽपि च निर्ग्रन्था, निर्ममत्वा अवञ्चकाः ॥ ९४ ॥
इति संश्चिन्त्य धन्योऽसौ सुव्रताचार्यसन्निधौ । जगाम बहुमानेन, प्रणम्योपाविशत्पुरः ॥ ९५ ॥
ततः श्रीसुव्रताचार्यो, धन्याय जिनदेशितम् । द्विविधं धर्ममाचख्यौ, स्वर्गमोक्षसुखप्रदम् ॥ ९६ ॥
सोपि सद्दर्शनोपेतं, गृहिधर्ममुपाददे । आत्मानं सत्यनामानं, बहुमंस्त चिराय च ॥ ९७ ॥
सुव्रतांघ्रियुगं नत्वो—पागम्य निजमन्दिरम् । सन्तुष्टहृदयो भार्याः, ( भार्यं ) प्रोवाचैवं महामनाः ॥ ९८ ॥
सुव्रताचार्यपादान्ते—ऽलब्धपूर्वमिवोत्तमम् । सुभ्रुवोऽद्य मयाऽलाभि, धर्मरत्नमिहार्हतम् ॥ ९९ ॥
ततो जगाद सोमश्री—र्विकसत्मुखपङ्कजा । स्वामिन् भद्रतरं जातं, जाता यद्यूयमार्हताः ॥ १०० ॥
ममैतस्याश्च सुन्दर्याः, कुलक्रमसमागतः । धर्मोऽयं कुसुमावल्या—स्त्वस्मत्संसर्गतोऽस्ति यत् ॥ १ ॥
तदेवमेकचित्तत्वे सर्व्वेषामप्यबाधिताः । सम्पत्स्यते त्रिवर्गोऽपि, लोकद्वयसुखप्रदः ॥ २ ॥
ततश्च सह पत्नीभिः, प्रासादे सप्तभूमिके । त्रायस्त्रिंशसुपर्व्वेव, ललति स्म स लीलया ॥ ३ ॥

तत्रचोत्पाद्यमानेऽपि, कीले धन्यस्य पुण्यतः । आविरासन्निधानानि, चक्रिणो दिग्जये यथा ॥४॥
अथ रत्नप्रदीपेन, द्योतिते वासमन्दिरे । रात्रौ पर्यङ्कशय्याया—मासित्वेभ्यसुतः सुधीः ॥ ५ ॥
पत्नीभद्रासनासीनाः, कविदेव्युपमाः पुनः । प्रश्नोत्तराणि पप्रच्छ, विनोदोऽयं विपश्चिताम् ।६।युग्मम्॥
प्रगल्भा राजपुत्रीत्वा—द्व्यक्तमस्खलिताक्षरम् । पपाठ प्रथमं तत्र, सोमश्रीः श्रेणिकाङ्गजा ॥ ७ ॥
अभिलषति किं तृष्णाक्रान्तो नृपस्य च कं जनो, वितरति सदा किं चाजय्यं सरागिनरैरिह ।
सुरसमुदयाः कीदृक्षं वा नमन्ति मुनिं मुदा, प्रवदति विधिः कीदृग्जैनं मतं भुवि विश्रुतम् ॥ ८ ॥
कुशाग्रीयधियां वेद्यं चलद्बिन्दुततावलीं । व्यक्तातललतंरूपोत्युक्त्वा सा वल्लभाननम् ॥ ९ ॥
स प्रमोदमवैक्षिष्ट, ततोऽवोचत्सतामिति । व्यक्तं करणदं कान्ते, दुर्गमं किमिहाधुना ॥ १० ॥
अथोवाच वणिकपुत्री, सुन्दरी रूपसुन्दरी । पठ्यमानं मया नाथ, भव्यं प्रश्नोत्तरं शृणु ॥ ११ ॥
वदत्यर्थः प्रेमोद्वहति परमं को मधुरिपौ, तथा सीतासूनुर्भुवि निगदितः कीदृश इह ।
शितिर्ब्रूते भूपं सुनयनिपुणं वाञ्छति च कः, समाख्याति क्रीडा धरणिदुहितुः कः किल पिता ॥१२॥
चलद्विसर्गकं ज्ञात्वा, निसर्गसुभग प्रिय । ततावलिः स्फुटातात—तलश्चेत्यनुबुध्यताम् ॥ १३ ॥
ततः श्रेष्ठिसुतोऽवोच—त्प्रिये प्रश्नोत्तरं वरं । यतोऽत्र रामजनक, इत्युत्तरमनुत्तरम् ॥ १४ ॥
कुसुमावल्यथ प्राह, साहङ्कारं भवादृशां । विद्वत्ता कीदृशी स्वामि—न्नीदृशैर्विदितैरपि ॥ १५ ॥

मदुक्तं यदि जानीथ, ज्ञास्यते च तदा ध्रुवम्। इत्युक्त्वा सापठत्तूर्ण—मिति पण्डितमानिनी ॥१६॥

ब्रूतो धान्यविशेषपङ्कजभुवौ कस्तीव्रपिडाकरो, भाषन्ते च महीरुहामिह भिदः कीदृग्नृपो दुर्जयः।
श्लेषे धातुरभाणि को जलचरो विःषय्यदौघस्तथा, वक्त्याख्यातिकमादिमं च वचनं किम्वर्तमानाश्रितं॥

गतं पुनर्गतं प्रत्या—गतं प्रश्नोत्तरं त्वदः। व्यक्तैव वर्त्तते नाथ ततालीति ततातनी ॥ १८ ॥

ईदृशानी विदन्त्येवा ऽस्मदीया गोदुहोऽपि हि। किं ब्रूमोऽनः प्रतीतैव प्रियाते तलिकावली ॥१९॥

कर्णाञ्जलिपुटैः पीत्वा स्वभर्तुर्वचनामृतम्। प्रमोदपूर्णचित्तास्ता स्तिस्रोऽपि मधुरस्वरम् ॥ २० ॥

विनयेनाञ्जलिं बध्वा प्रोचु र्युगपदेव तं। किमपि त्वमपि स्वामिन् पठ प्राज्ञशिरोमणे ॥२१॥युग्मम्

ततस्तद्वचसा सोपि प्रोन्मीलत्प्रीतभाङ्कुरः। सुवर्णमृदुभेदं प्रश्नोत्तरमदोपठत् ॥ २२ ॥

लोकेन प्रार्थ्यते का जगति निगदितः कोमहीरुड्विशेषः, किं वा रूपं स्त्रियां सौ भवति ननु तदः शब्दशास्त्रप्रसिद्धं।
कः शब्दो भर्तृवाची परगुणनुतिभिः के प्रहृष्यन्ति चित्ते, ध्यातव्याः के गदौघप्रशमनपरमेष्ठिष्वहो पञ्चमाः स्युः ॥२३॥

छिर्यस्तं द्विः समस्तं च प्रश्नोत्तरमिदं प्रियाः। ताततश्चेति रूपेह प्रस्फुटैव ततीवली ॥ २४ ॥

प्रश्नोत्तरमिदं श्रुत्वा चिन्तयन्त्यो मुहुर्मुहुः। तास्तिस्रोऽपि क्षणं चक्रुः, मिथो मुखनिरीक्षणम् ॥ २५ ॥

स्थित्वा मनाक् विहस्योचुः, सर्वायुगपदेव ताः। नूनमात्मानुरूपास्ते, नाथेष्टा इह साधवः ॥ २६ ॥

एवं प्रकारैर्विविधैर्विनोदैर्विचक्षणाभिः सहधर्मिणीभिः। क्रीडन्नसाविभ्यसुतः सुखेन, मुदात्यनैषीत्कतिचिद्दिनानि ॥२७॥

शालिभद्रकुमारोऽथ, वर्द्धमानोऽष्टवार्षिकः । बभूव स्वजनानन्दा—नन्दसन्दोहवर्द्धनः ॥ २८ ॥
स्वस्मिन्नेव गृहे भद्रा, पाठनायात्मजन्मनः । स्वप्रज्ञास्तसुराचार्यं, कलाचार्यं समानयत् ॥ २९ ॥
तत्पार्श्वे यत्नतो धीमा—नधीयानः स आददे । साक्षीकृतकलाचार्यो, लीलया सकलाः कलाः ॥३०॥
रामाजनमनोऽम्भोधि—क्षोभचन्द्रोदयोपमम् । तारुण्यं पुण्यलावण्य—पीयूषाञ्चितमाप सः ॥ ३१ ॥
सर्व्वलोकप्रियो भोगी, दानशौण्डो दयापरः । दाक्षिण्यामृतपाथोधि—र्विनीनवनीयो नयी ॥ ३२ ॥
परोपकारप्रवणः प्रियधर्मा प्रियंवदः । शालिभद्रकुमारोऽभू—द्यौवनेऽपि विवेकभाक् ॥३३॥युग्मम्॥
छत्राकारोत्तमाङ्गः[1] शितिरुचिरकचः[2] पूर्णचन्द्रार्द्धभालो, भुग्नस्निग्धासितभ्रूः कुवलयनयनः पूर्वमेन्दूपमास्यः ।
बिम्बौष्ठश्चारुनासो विशदरदततिः[3] स्कन्धलग्नाग्रकर्णो, व्यूढोरस्को[4] वृषांसो[5] द्विरदकरभुजः पल्लवाताम्रपाणिः ॥ ३४ ॥
दीर्घश्लाघ्याङ्गुलीको विमलकररुहश्रेणिरुद्दीप्रपार्श्व—श्चञ्चद्दम्भोलिमध्यो[6] वरतरकदलीस्तम्भरम्योरुयुग्मः ।
सारङ्गश्रीसुजन्घाद्वितय उपचितोन्नम्रकूर्मोन्नतांघ्रिः, सुश्लिष्टालक्ष्यगुल्फोऽरुणचरणनखो वर्त्तुलारक्तपार्ष्णिः ॥ ३५ ॥
नानाभूषणभूषितः परिहितप्रोद्दामदिव्यांशुकः, सच्छायोऽर्थिसमूहचिन्तितमनो—ऽभीष्टार्थसम्पादकः ।
क्रीडन्मित्रवरैर्व्यलोकि युगपद्—द्वात्रिंशता श्रेष्ठिभि—र्मूर्तो जङ्गमकल्पपादप इव श्रीशालिभद्रः क्षितौ ।३६।त्रिभिर्विशेषकं॥
ततस्ते श्रेष्ठिनस्तस्य, रूपाद्याक्षिप्तमानसाः । सममेव समाजग्मुः, श्रेष्ठिगोभद्रमन्दिरम् ॥ ३७ ॥

१ उत्तमाङ्गं शीर्षम् २ शितयः श्यामाः सुन्दराश्च केशा यस्य सः ३ निर्मलदन्तश्रेणिः ४ विशालवक्षाः ५ वृषभवत् अंसौ यस्य सः ६ दम्भोलिः वज्रम्.

भद्रयासनदानाद्यै—स्ते कृतप्रतिपत्तयः । कन्याद्वात्रिंशतं दातुं, तामयाचन्त सूनवे ॥ ३८ ॥
दृढप्रीतमना भद्रा, पुरस्तेषाममन्यत । विवाहं शालिभद्रस्य, कन्याभिर्युगपद्भृशम् ॥ ३९ ॥
विशालकुलसम्भूता, विशुद्धतरजातिकाः । प्रोद्भिन्नोद्यतारुण्या, वयःसौन्दर्यशालिनीः ॥ ४० ॥
राकानिशाकराकारा—नना नलिनलोचनाः । सत्कुन्दकलिकादन्ता, इभकुम्भपयोधराः ॥ ४१ ॥
चञ्चद्वलित्रयोपेता, वज्रमध्यतनूदराः । रम्भास्तम्भोपमानोरु—स्त्रिदिवेशवधूपमाः ॥ ४२ ॥
द्वात्रिंशतमिमाः कन्याः शालिभद्रेण सादरं । पर्यणाययदेकत्र, लग्ने भद्रा प्रमोदतः ॥४३॥ चतुर्भिःकलापकम्
गोभद्रजीवदेवोऽथ, विबुध्यावधिना सुतम् । द्वात्रिंशतेभ्यकन्याभिः, कृतपाणिगृहोत्सवम् ॥४४॥
शीघ्रं भवनवासिभ्यो, देवेभ्यः सपरिच्छदः । मुनिदानार्जितागण्य—पुण्याकृष्टः समाययौ ॥४५॥ युग्मम्
रम्यं विस्तीर्णमुत्तुङ्गं प्रासादं सप्तभूमिकं । स चक्रे शालिभद्रार्थं, सुरप्रासादसन्निभम् ॥ ४६ ॥
तत्राद्यभूमिकाधस्ता—दश्वेभकरभादिकाः । बध्यन्ते यत्र धार्यन्ते, शकटस्यन्दनादयः ॥ ४७ ॥
प्रांशुरत्नमयस्तम्भा, विस्तीर्णायतसत्तुलः । यानशाला विशालास्ता—श्चक्रेऽसावसुरेश्वरः ॥ ४८ ॥
मञ्जिष्ठादीनि भाण्डानि, स्थाप्यन्ते यत्र सर्वदा । ऊर्ध्वमादिसुवश्चक्रे, स शालास्तत्र बन्धुराः ॥४९॥
द्वितीयायां पुनर्भूमौ, दासीदासादिसंहतेः । भोजनादिक्रियास्थाना—न्यतिरम्याणि स व्यधात् ॥

१ कमलाक्षीः

तृतीयायां रसवती-स्थानानि स्थगिकालयान् । गवाक्षजालकालीढाः, प्राज्याः पानीयशालिकाः ५१
चतुर्थ्यां चासनस्वाप-स्थानभोजनमण्डपान् । वस्त्रालङ्काररत्नादि-भाण्डागाराणि निर्ममे ॥५२॥युग्मम्
प्रधानानेकधारत्न—मयार्हद्बिम्बहेतवे । देवालयं च चक्रेऽसौ, निजचैत्यगृहोपमम् ॥ ५३ ॥
पञ्चम्यां तु वसन्तादि—समस्तऋतुसम्भवैः । नानाविधफलोपेतै—र्नानापुष्पमनोहरैः ॥ ५४ ॥
महीरुहगणैर्गुच्छ-लतागुल्मैश्च सुन्दरम् । आराममतिविस्तीर्णं, विदधे स सुखाकरम्॥५५॥युग्मम्॥
तदन्तर्मणिसोपान—शालिनीर्विमलाम्भसः । क्रीडापुष्करिणीर्वापी—नीलरक्तसिताम्बुजाः ॥५६॥
क्रीडाक्षोणिभृतो रम्यान्, वनखण्डोपशोभितान् । स्फाटिकान्स चकारोच्चैः, कैलासाचलसन्निभान्
निगूढजलसञ्चार—निपतन्नीरशीकरान् । स धारामण्डपांश्चक्रे, वर्षाभ्रैरिव-निर्मितान् ॥ ५८ ॥
एवमन्यान्यपि क्रीडा—स्थानानि विविधान्यसौ । विदधे शालिभद्राय, पुण्यं हि जयति क्षितौ ॥५९॥
षष्ठभूमौ वासगृहं, वासवागारसन्निभम् । शालिभद्राय चक्रेऽसौ, चित्रशालादिबन्धुरम् ॥ ६० ॥
पार्श्वेऽपवरकांस्तस्य, चक्रे द्वात्रिंशतं तथा । द्वात्रिंशतः कलत्रेभ्यो—ऽसुरस्तत्प्रतिरूपकान् ॥ ६१ ॥
वासवेश्मनि विस्तीर्णं, गङ्गापुलिनसन्निभम् । पार्श्वतोऽभ्युन्नतं किञ्चि—द्गम्भीरं मध्यभागतः ॥६२॥
नवनीतवन्मृद्वीभि-स्तूलिकाभिस्समन्वितम् । द्वात्रिंशतोपधानादि-वस्तुभिश्चापि सङ्गतम् ॥६३॥
विचित्रचित्रविच्छित्ति-चित्रितं नेत्रहर्षदम् । वर्यं पर्यङ्कमार्याय, शालिभद्राय सोऽकरोत् ॥६४॥ त्रिभिर्विशेषकम्॥

चक्रे पर्यङ्कमेकैकं, तूलिकाद्युपशोभितम् । प्रत्येकं च कलत्राणां, स्वोत्पादशयनोपमम् ॥ ६५ ॥
सप्तम्यां भूमिकायां च, मसृणं मणिकुट्टिमम् । निर्ममेऽसौ सुराधीशो लीलाचङ्क्रमणोचितम् ६६
चक्रे नाभिप्रमाणां च, वेदिकां सर्वतोऽपि सः । रत्नजालान्तरोपेतां, जगतीवेदिकोपमाम् ॥६७॥
तस्याश्चोपरि सद्वृत्तान्, स्फाटिकान्कपिशीर्षकान्। शालिभद्रास्यशोभांस्तान्, बाह्यचन्द्रानिवागतान्
पुण्याकृष्टोऽसुरोऽस्मै स वितरति वरं प्रत्यहं चाङ्गरागं, वस्त्रालङ्कारपुष्पाण्यमृतरसफलाहारमग्र्यं ततश्च ।
निर्विघ्नं क्रीडति स्म त्रिदशपतिरिव प्रेयसीभिः सदाऽसौ, भद्रा व्यापारमन्यं स्वयमपि सकलं गेहसत्कं चकार ॥६९॥
अथेभ्यतनयो धन्यो, भोजनानन्तरं सुधीः । समादाय च ताम्बूलं, वातायनमुपाविशत् ॥ ७० ॥
यावत्पश्यति तत्रस्थः, पुरश्रियमसौ ततः । ददर्श स्वगृहच्छायो—पविष्टं वृद्धयोर्युगम् ॥ ७१ ॥
तच्चाहाराद्यभावेन, कृशं विच्छायतां गतम्। ग्रीष्मतप्तं मृगद्वन्द्वं, वृक्षच्छायामिवाश्रितम् ॥ ७२ ॥ आदियुग्मम् ॥
ततः सोऽचिन्तयदहो, अनौचित्यं विधेरदः । स्वकुक्षिभरणाशक्ता—श्चिरञ्जीवन्ति यन्नराः ॥ ७३ ॥
अथवा न विधेर्दोषो, दोषः खल्वनयोरयम् । तारुण्येऽपि तपस्तप्तं, यन्न मुक्त्वा गृहाश्रमम् ॥७४॥
अथवा नानयोर्दोषो, दोषोऽत्र श्रीमतामयम् । एवंविधानपीक्षित्वा, यद् भृशं नोपकुर्वते ॥ ७५ ॥
किञ्चामू पश्यतो दृष्टि—र्मम स्निह्यति सादरम् । दृष्टपूर्वाविवैतौ मे, मनः सुखायतोऽधिकम् ॥७६॥
इत्यसौ चिन्तयन्नेवो—पलक्ष्य पितराविति । अत्यन्तं पीडितश्चित्ते, संस्मृत्य विभवं तयोः ॥ ७७ ॥

कस्य कस्य न जायन्ते, संसारे विपदोऽथवा । किन्तु कार्यः स्वबन्धूना-मुपकारो महात्मभिः ॥७८॥
तदहो किं ममानेन, धनेन बहुनाऽपि हि । नोपयोगं प्रयात्युच्चैः, स्वबन्धूनामपीह यत् ॥ ७९ ॥
विमृश्येति झगित्येव, प्रतिहारं समादिशत् । भो भो वृद्धयुगं तिष्ठ—त्युपविष्टं गृहान्तिके ॥८०॥
स्नपयित्वाऽऽदरेणैत—द्भोजयित्वा विशेषतः । परिधाप्य सुवस्त्राणि, समानय ममान्तिकम् ॥८१॥
तं प्रणम्य प्रतीहारो, विनिर्गत्य गृहाद्बहिः । स्वर्णदण्डकरः शीघ्रं, गत्वा ताविदमब्रवीत् ॥ ८२ ॥
जामाता नृपतेरेष, युवामाकारयत्यतः । समागच्छतमुत्थाय, प्रत्यासन्नं गृहान्तरम् ॥ ८३ ॥
कान्दिशिकौ चकम्पाते, तद्वचःश्रवणाच्च तौ । आपद्गता हि पश्यन्ति, सर्वतो व्यसनोदयम् ॥८४॥
चिन्तयामासतुश्चैव—महो नौ मन्दपुण्यता । विदेशागमनेऽप्येवं, रतिं यन्न लभावहे ॥ ८५ ॥
चिन्तयन्ताविति प्रोचे, प्रतिहारो महामनाः । आर्यौ मा कुरुतां भीतिं, प्रीत्या ह्वाययति ह्यसौ ॥८६॥
ततः क्षणं समाश्वस्य, तद्वाक्यश्रवणादिमौ । मन्दं मन्दं सम तेन, गृहाभ्यन्तरमीयतुः ॥ ८७ ॥
स्नापितौ भोजितौ तेन, वितीर्य वरवाससी । उपधन्यं समानीया—सने तावुपवेशितौ ॥ ८८ ॥
ततस्तावब्रवीद्धन्यः, सुधामधुरया गिरा । आर्यौ कुतः समायातौ, जानीतो वेह कञ्चन ॥ ८९ ॥
ततस्तावूचतुः श्रीमन्, सुप्रतिष्ठपुरादिह । अद्यैवावां समायातौ, जानीतौ(वो)ऽत्र न कञ्चन ॥ ९० ॥
सभायामिह किं कोऽपि, दृष्टपूर्वोऽस्ति वामिति । उक्ते धन्येन साकूतं, चिरं संवीक्ष्य सस्पृहम् ९१

वृद्धाऽवोचल्लघुः पुत्रो, ममासीत्पञ्चमो गुणी । धन्य इत्याख्यया तस्या–नुरूपो लक्ष्यते भवान् ॥९२॥
अथासावासनं मुक्त्वा, पपात पितृपादयोः । यत्सर्वाभरणेभ्योऽपि, विनयो भूषणं परम् ॥ ९३ ॥
धनिनां सुखिनामेषां, त्वया रे दैव निर्दय । ईदृशीं दुर्दशां कष्टां, कुर्वता किमुपार्जितम् ॥ ९४ ॥
इतिसंचिन्तयन्नेव, बाष्पप्लुतविलोचनः । जगाद जननीं धन्यः, सखेदो गद्गदाक्षरम् ॥९५॥युग्मम्॥
सुप्रतिष्ठपुरस्थानां, भवतां तादृशे धने । दुर्दशेयं महाकष्टा, मातर्निपतिता कथम् ॥ ९६ ॥
माता प्राह श्रियः पुसां, जायन्ते वत्स पुण्यतः । आविर्भूते गृहेऽस्माकं, तदा पुण्यवति त्वयि ॥९७॥
निपानमिव मण्डूकाः, सरः पूर्णमिवाण्डजाः । संश्रिता गृहमस्माक–महंपूर्विकया श्रियः ॥९८॥
भवति प्रोषिते वत्स, प्रोषिताः सम्पदोऽपि हि । रवौ क्षेत्रान्तरं प्राप्ते, तद्भासः किमिहासते ॥९९॥
किञ्चिच्चौरैर्हृतं किञ्चिद्, व्यवहारे च विप्लुतं । किञ्चित्पण्याङ्गनाद्यूता—सक्तैः पुत्रैर्विनाशितम्॥२००॥
ज्येष्ठपुत्रापराधात्स्वं, किञ्चिद्राजकुले गतं । एवं सर्व्वस्वनाशेन, दुर्दशेयमजायत ॥ १ ॥
ततश्च विभवाभावा–त्पुरे तत्र पराभवः । प्रावृतत्प्राकृतेभ्योऽपि[1], दारिद्र्यं ह्यापदां पदम् ॥ २ ॥
न स्थातुं शक्यते तत्र, क्षणमात्रं ततो वयं । सकुटुम्बा इहायाताः, पुण्यैर्दृष्टो भवानपि ॥ ३ ॥
धन्यस्ततो जगादैवं, भ्रातरः क्वाम्ब ते मम । वर्त्तन्ते सह पत्नीभिः–र्धनचन्द्रादयोऽधुना ॥ ४ ॥

---

[1] सामान्यजनेभ्यः

उवाच जननी वत्स, सोदराणामपि त्वया । ग्राह्यं तेषां न नामापि, कर्मणा वैरिणो हि ते ॥५॥
मातर्यद्यपि ते वैरं, वहन्त्यज्ञतया मयि । तथापि न मया कार्यो, रोषस्तेष्विति सोऽभ्यधात् ॥६॥
ततः सा चिन्तयामास, भुव्यहो महदन्तरं । यस्मादेकोदरोत्पन्ना, एकत्रैव प्रवर्द्धिताः ॥ ७ ॥
एके कुटिलतोपेता, अपरे सरलाः पुनः । जायन्ते स्वप्रकृत्यैव, बदर्यां इव कण्टकाः ॥ ८ ॥
इति सा चिन्तयित्वोचे, वत्स तिष्ठन्ति ते वने । तदाह्वानाय स प्रेषी—त्प्रतीहारं ततस्तदा ॥ ९ ॥
ततस्तेन समाहूताः, सभार्या अपि ते वनात् । लज्जावनतमूर्द्धानो, धन्यं समुपतस्थिरे ॥ १० ॥
धन्येनापि च सम्भाष्य, प्रियालापेन तेऽभितः । सच्चक्रिरे महामूल्यै—र्वस्त्रादिभिरनुत्तमैः ॥ ११ ॥
स्थाने तथाविधान् भ्रातॄन्, धन्योऽसौ यदपूजयत् । अपकारमपाकृत्य, महान्तो ह्युपकुर्वते ॥१२॥
अत्रान्तरे समागत्य, सोमश्रीप्रमुखाः प्रियाः । प्रणेमुः श्वशुरादीनां, चरणौ भर्त्तुराज्ञया ॥ १३ ॥
अथाशीर्भिरमोघाभि—स्तेऽपि ता अभ्यनन्दिषुः । यथानुरूपसत्कारे, कुलीनानां क्रमो ह्ययं ॥१४॥
उपकारं स्मरन्नेष, ज्येष्ठभ्रातुः सधर्मिणीम् । सच्चकार विशेषेण, भूषणाद्यैर्धनश्रियम् ॥ १५ ॥
विहितं येन केनापि, कालेनापि महीयसा । विस्मरन्ति महान्तो हि, नोपकारं कदाचन ॥ १६ ॥
ततोऽसावृणमोक्षाय, पितरौ जिनदेशिते । धर्मे संस्थापयामास, सतामेष क्रमो यतः ॥ १७ ॥
धन्यप्रभावतः सर्व्वे, भ्रातरः स्वच्छतां ययुः । पद्माकराः शरत्काले, कुम्भयोनेरिवोदयात् ॥१८॥

१ अगस्त्यस्य

धन्यस्तांस्तादृशान् ज्ञात्वो-पदिश्य जिनदेशितं । धर्मे चास्थापयद्यस्मा—दिष्टं धर्मे नियोजयेत् १९
तुतोष न तथा धन्यो, भार्यालाभादिभिः सुधीः । पित्रादिनिजबन्धूनां, यथा धर्मे नियोजनात् ॥
दृष्ट्वोपकारितां तस्या—पकर्त्तारोऽपि सोदराः । मात्सर्यं तत्यजुर्यस्माद् गुणाः संवननं[1] परम् ॥२१॥
कृतकृत्योऽहमित्येष, मन्वानः श्रेष्ठिनन्दनः । निरतो धर्मकृत्येषु, दिवसानत्यवाहयत् ॥ २२ ॥
दत्त्वाथ विभवं प्राज्यं, निजग्रामेषु सादरं । स प्रीतहृदयो भ्रातृ-नाधिपत्ये न्यवीविशत् ॥ २३ ॥

श्रीजैनधर्मं स्वयमादधानः, कुर्व्वंश्च यत्नात्पितृपर्युपास्तिम् । त्रिवर्गबाधापरिहारतोऽसौ, कालं व्यतीयाय सह प्रियाभिः

इति श्रीधन्यशालिभद्रमहर्षिचरिते धन्यमालाकारकुसुमपालगृहावस्थानश्रेणिकराजगोभद्रश्रेष्ठिकुसुमपालमालाकार-कन्यापरिणयनसमृद्धिप्राप्तिजिनधर्म्मावाप्तिशालिभद्रविवाह-जनकजीवदेवनिर्मितसप्तभूमिप्रासादादिकथनधन्य-मातृपितृभ्रात्रादिमीलकतत्समृद्धिदानजिनधर्मापणस्वयंधर्म्मानुष्ठानप्रवृत्तिव्यावर्णनो नाम तृतीयः परिच्छेदः ॥ ३ ॥

---

१ वशीकरणम्

॥ अथ श्रीचतुर्थः सर्गः प्रारभ्यते ॥

अथान्यदा पुरे तत्र, ग्रीष्मर्त्तावपि शीतलान्। उष्मलानपि शीतर्त्तौ, वातपित्तकफापहान् ॥ १ ॥
षट्खण्डभरतस्वामि—स्त्रीरत्नसदृशान् बहून् । वरेण्यानतिविस्तीर्णा—नजीर्णान् रत्नकम्बलान् ॥२॥
सत्पुण्यनरभोगार्हा-न्नेपालविषयोद्भवान्।लाभार्थिनः समादाय, वणिजः केचनाययुः॥३॥त्रिभिर्विशेषकम्
रत्नकम्बलहस्तास्ते, प्रत्यट्टं प्रतिमन्दिरम् । विक्रेतुं वणिजस्तत्र, नगरे परिबभ्रमुः ॥ ४ ॥
तेभ्यो नैकोऽपि केनाऽपि, जगृहे धनिनाऽपि हि । महामूल्यपदार्थाना—मर्थिनो विरलाः खलु ॥५॥
ततः श्रेणिकराजस्या—सीनस्यास्थानमण्डपे । सुधर्मायामिवेन्द्रस्यो—पतस्थुर्वणिजः किल ॥ ६ ॥
ततः प्रणम्य पादौ ते, श्रेणिकस्य महीपतेः । सादरं दर्शयामासुः, सनस्तान् रत्नकम्बलान् ॥ ७ ॥
श्रेणिकोऽपि वणिग्वर्या—नब्रवीत्तुष्टमानसः । भो भो भद्राः किमेतेषां, मूल्यं कथयत द्रुतम् ॥८॥
एवमाज्ञापिता राज्ञा, ते क्षणेन विचक्षणाः । एकैको लक्षमूल्योऽय—मिति राज्ञे व्यजिज्ञपन् ॥९॥
तच्छ्रुत्वा चकितो भूपः, प्राह भो रत्नकम्बलान्। महार्घानिह युष्माकं, ग्रहीतुं कः क्षमो जनः ॥१०॥
इति राज्ञा विसृष्टास्ते, विमनस्का वणिग्वराः । सभातो निर्ययुः कृत्यं, किमन्यत्प्रेर्वणीदृशे ॥११॥
किं कुर्मः कुत्र गच्छामो, दर्शयामोऽत्र कस्य वा । इति चिन्तयतां तेषां, मनस्येवमभूत्तदा ॥१२॥

१ श्रेष्ठान् २ नूतनान् ३ प्रस्तावे

श्रीमतः शालिभद्रस्य,श्रेष्ठिपुत्रस्य मन्दिरम् । श्रूयतेऽत्र महाभूति–कलितं विश्रुतं भुवि ॥ १३ ॥
गच्छामस्तत्र चेद्भद्रा–श्रेष्ठिन्यौदार्यशालिनी । गृह्णीयान्नोपभोगार्हाः, कंदर्यावर्यवस्तुनः ॥ १४ ॥
आगत्यान्तःपुरे काचि–चेटिका श्रेणिकान्तिकात् । कम्बलाग्रहणोदन्तं, चेल्लणायै न्यवेदयत् ॥१५॥
विसृज्य परिषल्लोक—मुत्थायास्थानमण्डपात् । तदैवं वसुधाधीशो—ऽभ्यगादन्तःपुरं किल ॥१६॥
चेल्लणोवाच किं स्वामिन्, युष्माभिर्मम हेतवे । नाग्राहि कम्बलः कोऽपि, किं नाहं तव वल्लभा १७
स्वामिन् कृपणता केयं, निःस्वस्येव तवेदृशी । उदारचरिता यस्मा–द्भवन्ति पृथिवीभुजः ॥ १८ ॥
तथा नाथ तव ख्यातिं, ये श्रुत्वेह समागताः । वणिज स्तत्पुरो यूयं, लघूभूतास्तदग्रहात् ॥ १९ ॥
यत्र यत्र भ्रमिष्यन्ति, नैगमास्तत्र तत्र ते । अकीर्तिपटहं स्वामिन्, वादयिष्यन्ति तेऽन्वहम् ॥२०॥
यदि मूल्यं न ते नाथ, विद्यते तदिमां मम । रत्नावलिं समादाया–दत्स्वैकं रत्नकम्बलम् ॥ २१ ॥
मा भवन्तु गताशास्ते, समागत्य तवान्तिकं । अभीष्टं पूरयन्त्येव, कल्पवृक्षा इवोत्तमाः ॥ २२ ॥
इत्येवं कथिते देव्या, श्रेणिकः पृथिवीपतिः । तदैवाकारयामास, रत्नकंबलनैगमान् ॥ २३ ॥
भो भद्रा मम मूल्येन, ददध्वं रत्नकम्बलम् । एकं दीनारलक्षेणे–त्युक्ता राज्ञाऽवदन्निदम् ॥ २४ ॥
स्वामिन्नितो विनिर्गत्य, कम्बलाविक्रये वयम् । विषण्णाः शालिभद्रस्य सर्वेऽगच्छाम मन्दिरम् ॥२५

१ कृपणाः २ सभामण्डपात्

रत्नकम्बलकास्तत्र, भद्रया शीलभद्रया । यथोक्तेनैव मूल्येन, सर्व्वेऽग्राहिषत प्रभो ॥ २६ ॥
चेल्लणा च तदाकर्ण्य, रोषविस्फुरिताधरा । जगाद पृथिवीनाथं, सनिष्ठुरमिदं वचः ॥ २७ ॥
यादृशी वाणिजस्त्रीणां, तादृश्यपि न विद्यते । क्षत्रियप्रवरस्यापि, तव स्वामिन्नुदारता ॥ २८ ॥
ततः प्रेष्य प्रतीहारं, शालिभद्रगृहे तदा । अयाचि कम्बलं भद्रा, श्रेणिकेन महीभुजा ॥ २९ ॥
भद्रे येऽद्य त्वया क्रीताः, कम्बलास्तेषु कञ्चन । एकं मूल्येन मे देहि, रत्नकम्बलमुत्तमम् ॥३०॥
भद्रोचे कम्बला येऽद्य, क्रीताश्छिन्नास्तदैव ते । शालिभद्रकलत्राणां, पादप्रोञ्छनहेतवे ॥३१॥
पूर्व्वोपात्तास्तु सन्त्येते, प्रकटीभूततन्तवः । किञ्चित्कंसारिकाकीटै—र्भक्षितत्वात् क्वचित् क्वचित् ॥
शय्यामारोढुकामानां, वधूनां वासमन्दिरे दुन्वन्त्यङ्घ्रितलं पद्म—दलवत्कोमलं यतः ॥ ३३ ॥
अच्छिन्नाः सन्त्यतस्ते चे—दुपकुर्व्वन्ति भूपतेः । मूल्यं विनापि ग्रह्यतां, धन्यं यदुपयोगि वः ३४
एवमुक्तः प्रतीहारः, समागत्य नृपान्तिकं । यदुक्तं भद्रया तत्र, तदाख्यत्पृथिवीभुजे ॥ ३५ ॥
अत्रान्तरे नरेन्द्रस्य, पादवन्दनहेतवे । तत्राभयकुमाराख्यः, सुतामात्यः समाययौ ॥ ३६ ॥
तं स्वस्याशेषकार्येषु, प्रच्छनीयं विशेषतः । बृहस्पतिमिवेन्द्रस्य, सर्वबुद्धिमहानिधिम् ॥ ३७ ॥
पप्रच्छोर्व्वीपतिः प्रीतः, कीदृशो विभवोदयः । श्रूयते शालिभद्रस्य, श्रीदस्येव महानिति ।३८।युग्मम्
पञ्चशत्या अमात्यानां, धुरीणः क्षीणदूषणः । तज्ज्ञोऽभयकुमारोऽपि, जगाद पृथिवीपतिम् ३९

जन्मान्तरार्जितागण्य—पुण्येनाद्भुतवैभवः । स्वामिस्त्वन्नगरे जज्ञे, भद्रागोभद्रनन्दनः ॥४०॥
रमतेऽसौ स्वपत्नीभिः, प्रासादे देवनिर्म्मिते । अप्सरोभिरिव स्वर्गे, निश्चिन्तस्त्रिदशेश्वरः ४१
इत्यादि शालिभद्रस्य, वर्णनं स्वसुताननात् । श्रुत्वा प्रतीये भूपाल, आप्ते प्रत्येति को न हि ॥
अहो धन्योऽहमित्येव—मचिन्तयदसौ तदा । निवसन्ति यदीदृक्षा, वणिजोऽपि हि मत्पुरे ॥४३॥
पश्यामि शालिभद्रं चे—द्भद्राङ्गजमहं तदा । भद्रं स्यादिति सञ्चिन्त्य, सोत्कण्ठस्तस्य दर्शने ॥४४॥
आहूत्यै शालिभद्रस्य, प्रधानपुरुषं ततः । तदैव प्रेषयामास, श्रीश्रेणिकमहीपतिः ॥ ४५ ॥
सोऽपि तद्गृहमायात—स्तमपश्यन्नुवाच ताम् । भद्रेऽहं प्रेषितो राज्ञा, शालिभद्रं दिदृक्षुणा[1] ।४६।
त्वरितं शालिभद्रं त—त्प्रेषयोर्वीशसन्निधौ । येन तद्दर्शनात्स्वामी, लभते प्रमदोदयम्[2] ॥ ४७ ॥
भद्रापि तमुवाचैवं, भूपतेस्त्वं निवेदय । अप्रसादो विधातव्यो, नास्मासु स्वामिना यतः ॥ ४८ ॥
सुकुमारशरीरोऽयं, शालिभद्रो ममाङ्गजः । पादमप्यसहो दातुं, बहिरेष स्वमन्दिरात् ॥ ४९ ॥
कदाचिन्नेक्षते योऽर्क—चन्द्रयोर्मण्डले अपि । कथंकारं समायातु, युष्माकं स निकेतनम् ॥ ५० ॥
इत्युक्तो भद्रया सोऽथ, समागत्य नृपान्तिकम् । स्वरूपं शालिभद्रस्य, निजगाद यथाश्रुतम् ५१
अत्वरिष्टतरां राजा, ततस्तद्दर्शनं प्रति । अहो पुण्यस्य सौभाग्य—कारिता काऽप्यलौकिकी ५२

१ द्रष्टुमिच्छता २ हर्षोदयम्

भूयोऽपि तन्मुखेनैव, नृपो भद्रामभानयत् । यद्येवं गृहमभ्येत्यं, पश्यामि तत्र नन्दनम् ॥ ५३ ॥
भद्रोवाच कृतोऽयं मे, प्रसादो भूभुजा महान् । केवलं कतिचित्स्वामी, वासराणि प्रतीक्षताम् ५४
शोभां राजपथादीनां, यावन्निर्वर्तयाम्यहम् । सामग्रीं च गृहे यावत्प्रभोरागमनोचिताम् ॥ ५५ ॥
ततोऽभ्युपगते राज्ञा, तथाऽऽज्ञाप्यन्त पुरुषाः । कुरुध्वमानृपागारा—च्छोभां यावद् गृहं मम ५६
ततः केचिन्नरा मार्गं, तृणकाष्ठोपलोज्झितम् । जन्मोत्सवे जिनेन्द्राणां, चक्रुर्वायुकुमारवत् ॥ ५७ ॥
विरजीचक्रिरे केचि—द्राजमार्गं समन्ततः । वाचंयमाः कुशाग्रीय—धियो भव्यमनो यथा ।५८।
सद्गन्धोदकपूरेण, सिषिचुः केऽपि भूतलम् । जिनज्ञानोत्सवे मेघ—कुमारा इव सर्वतः । ५९ ।
अभ्युन्नतस्तम्भशिरोनिविष्ट-विशिष्टकाष्ठावलिसत्प्रतिष्ठाः । आच्छादिताश्चारुविचित्रभक्ति-वस्त्रैः समन्ताद्वरवेदिकान्ताः
गुञ्जन्मृदङ्गोध्धुरनादपूर्णा, गन्धर्वमन्द्रध्वनिगीतरम्याः । ६१ ।
सदङ्गविक्षेपसहावभाव—प्रनृत्यमानाद्भुतपण्ययोषाः ।
मञ्चातिमञ्चा विबुधोपशोभिता—श्चकाशिरे राजपथेऽन्तरान्तरा ।
दिवौकसां प्रेक्षणमण्डपा ध्रुवं, समागताः स्वर्गपुरादिलातलम् ।६२।त्रिभिर्विशेषकम् ।
स्थूलातिवृत्तामलमौक्तिकस्रजः, प्रलम्बमानाः क्वचिदन्तरान्तरा ।
नक्षत्रमाला इव भास्वरा बभुः, पुरः श्रियं द्रष्टुमिवागता दिवः ॥ ६३ ॥

१ आगत्य २ स्वीकृते ३ साधवः ४ तीक्ष्णबुद्धयः ५ दीप्तिमत्यः

वितेनिरे तत्र विचित्रवस्त्रै—र्वितानमालाः पुरुपैः समन्तात् । तथा यथा नैव बभूव भूम्नां, प्रभाकरस्यापि करप्रचारः
प्रत्यापणं तोरणमौलिलोल—माणिक्यधामास्ततमःप्रचारम् । अलक्षिताहःक्षणदाविशेषं, केचित्प्रचक्रुर्वरहट्टशोभाम्
भृङ्गाः क्वणन्तो मधुरं नितान्तमुन्निद्रसत्पुष्पगृहाणि भेजुः । तथा यथा गीतमृदङ्गवेणु—वीणास्वनानामभवद्विलोपः ॥६६॥
दन्दह्यमानागुरुचन्द्रसान्द्र-धूमैः सुगन्धीकृतराजमार्गाः । क्वाप्यन्तरन्तः शुभधूपघट्यो-ऽस्थाप्यन्त संस्थाननितान्तसुस्थाः॥

स आपणो नास्ति न यत्र तोरणः, स तोरणो नास्ति न यत्र पुत्रिकाः ।
ता पुत्रिका नैव न या विरेजिरे, स्त्रियः सचित्ता इव चारुयौवनाः ॥ ६८ ॥

तद्यौवनं नास्ति न यत्र रूपं, रूपं न तद्यत्सुभगत्वहीनम् । सौभाग्यमप्यस्ति न तद्यदत्र, मनो न यूनां हरते नितान्तम्

इति विधाप्य नृपाध्वपरिष्क्रियां, जनमनःकुमुदाकरचन्द्रिकाम् ।
गृहमपि द्रुतमेव हि भद्रया, प्रविदधे कमनीयतमं श्रिया ॥ ७० ॥

तथाहि—विशालगोपुरद्वार—बद्धवन्दनमालिकम् । नीलाम्भोरुहसञ्छिन्न—पूर्णकुम्भोपशोभितम् ७१
विशालैर्निर्मलैर्लोक—लोचनानन्ददायिभिः । चञ्चचन्द्रोदयैः कान्तं, सान्द्रैश्चन्द्रोदयैरिव ॥ ७२ ॥
लम्बमानोल्लसत्कान्तिसन्मुक्ताफलमालिकम् । विकस्वरसुगन्धाढ्यं कुसुमस्रङ्मनोहरम् ॥ ७३ ॥
चारुमुक्ताफलश्रेणी—स्वस्तिकालङ्कृताङ्गणम् । सुगन्धद्रव्यनिष्पन्न—धूपधूमौघवासितम् ॥ ७४ ॥

१ उल्लोचश्रेणय. २ बाहुल्येन

इत्थं विचित्रभङ्गीभि—रलङ्कार्यं निजं गृहम् । भद्रा प्रैषीन्नृपाहूत्यै, प्रधानपुरुषान्निजान् ॥ ७५ ॥
गत्वा राजकुलं स्थित्वा, पुरतः पृथिवीपतेः । बद्धाञ्जलिपुटाः प्रोचुः, सादरं विनयेन ते ॥ ७६ ॥
नाथोचितपरीवारः, शालिभद्रगृहाङ्गणम् । प्रसद्यालङ्कुरु स्वाङ्घ्रि—पङ्कजैरमलैरलम् ॥ ७७ ॥
ततः श्वेतं चतुर्दन्तं, गजं सेचनकाभिधम् । विहितस्फार शृङ्गारो—ऽधिरूढश्चेल्लणान्वितः ॥ ७८ ॥
अभ्रंमुवल्लभाध्यासि—शचीसखशचीपतेः । भृशं विभ्रममाबिभ्र—च्चचाल श्रेणिको नृपः ॥७९॥युग्मम्॥
ततोऽभयकुमाराद्याः, कियन्तोऽपि तमन्वयुः । मन्त्रिणस्तुरगारूढाः, सामानिकसुरा इव ॥ ८० ॥
स्वसिंहद्वारमारभ्य, यावद्भद्रानिकेतनम् । रमणीयतया साक्षात्, स्वर्गदेशमिव च्युतम् ॥ ८१ ॥
चक्षुर्मनःश्रुतिघ्राण—शरीराह्लादकारिणम् । विसिष्मियेतरां राज—मार्गमालोकयन्नृपः ॥८२॥युग्मम्॥
दर्शयन्मार्गविच्छित्ति—र्बभाषे चेल्लणां नृपः । पश्य प्रिये वणिक्पत्न्या, वैभवं पुण्यसम्भृतम् ॥८३॥
नृपः पश्यन्ननेकानि, कौतुकानि पदे पदे । शालिभद्रगृहद्वारं, प्रापदुच्छ्रिततोरणम् ॥ ८४ ॥
दध्यक्षताज्यसम्पूर्ण—पात्रसन्दर्शनादिना । चक्रिरे भद्रया तत्र, माङ्गल्यान्यवनीपतेः ॥ ८५ ॥
अत्यन्तोत्तुङ्गमातङ्गान्, जङ्गमानिव पर्वतान् । विशन्नथ महीनाथो, ददर्शोभयपार्श्वयोः ॥ ८६ ॥
काम्बोजादीन्विचित्राङ्गा—न्मार्त्तण्ड तुरगोपमान् । कांश्चिन्नितर्वर्णयामास, नृपस्तुङ्गांस्तुरङ्गमान् ॥ ८७ ॥

१ ऐरावणारूढेन्द्राणीसहितेन्द्रस्य २ मार्गरचनाः ३ ददर्श.

सरोराजीमिव क्वापि, सचक्रां तुङ्गवेदिकाम् । श्रेणिकः सद्गुणश्रेणिः, स्यन्दनालीमवैक्षत ॥ ८८ ॥
चमत्कारकरीं लक्ष्मीं, पश्यन्नेवं नरेश्वरः । अनेकमणिसोपाना—मारुरोहाद्यभूमिकाम् ॥ ८९ ॥
तत्रागण्यानि पण्यानि, बहुमूल्यान्यनेकधा । अनिन्दितानि विद्यन्ते, स्थाने स्थाने समन्ततः ॥९०॥
चारूक्रमुकवृन्दानि, नालिकेरीफलानि च । कुत्रचिद्गणयन्त्युचै—स्त्वरितं त्वरितं नराः ॥ ९१ ॥
आरोप्यते तुलायां च, धरिमद्रव्यसञ्चयः । कुङ्कुमादि परिच्छेत्तुं, विशुध्यर्थमिव क्वचित् ॥ ९२ ॥
कृष्णजीरकधान्याक–मरिचाद्या उपस्कराः । धान्यानि च प्रमीयन्ते, कुत्रचिद्वणिगादिभिः ॥ ९३ ॥
अनेकभङ्ग्यः क्वापि, लम्बिताहारयष्टयः । निर्मला व्योमगङ्गायाः, प्रवाहाः इव रेजिरे ॥ ९४ ॥
अत्यन्तमसृणीकृत्य, घर्षं घर्षं क्वचिन्नरैः । निर्मलीकृत्य विध्यन्ते, प्रवालशकलान्यलम् ॥ ९५ ॥
वैडूर्यादीनि रत्नानि, क्वापि साराणि साधुभिः । भव्यानामिव चेतांसि, क्रियन्तेऽपमलान्यहो ॥९६॥
अशेषदोषनिर्मुक्तं, जातरूपं कषादिभिः । परीक्ष्यादीयते क्वापि, सद्धर्म्म इव पण्डितैः ॥९७॥
अभातां क्वचिनास्तीर्णे, कस्तूरीहिमवालुके । निरस्यन्त्यावघं नृणां, सूर्यजह्नुसुते इव ॥९८॥
क्वचित्पट्टांशुकादीनि, पञ्चवर्णानि सादरम् । सद्वस्त्राणि परीक्ष्यन्ते, वणिक्पुत्रैरनेकधा ॥९९॥

१ क्रमुकाणि पूगीफलानि. २ अतिमृदूकृत्य ३ मलरहितानि. ४ सुवर्णम् ५ कस्तूरी कृष्णवर्णा, हिम च श्वेतं तयोर्वालुके. ६ सूर्यसुता यमुनानदी कृष्णजला, जह्नुसुता गङ्गानदी श्वेतजला.

एवमन्यानि पण्यानि, निचीयन्तेतरां क्वचित् । कानिचित्कापि गोप्यन्ते, प्रदीयन्ते च कानिचित् १००
इत्येवमादिभिः पण्यैः, संयुक्तामादिभूमिकाम् । वीक्षमाणः क्षमानाथः, पण्यवीथीमिवायताम् ॥१॥
वैडूर्य्यमणिसोपानां, द्वितीयामथ भूमिकाम् । सुखेनाध्यारुरोहोच्चैर्गजेन्द्रोऽधित्यकामिव ॥२॥
दास्यो दासास्तथा कर्म-कर्यः कर्मकरा अपि । पिबन्तः केऽपि पानीयं, कुर्वाणाः केऽपि भोजनम् ॥३॥
भुक्त्वा पीत्वा गवाक्षेषु, स्वपन्तः केऽपि केचन । इतस्ततो वितन्वाना, एहिरे याहिराः क्रियाः ॥४॥
स्वेच्छया केऽपि वलान्तः, प्रोद्दामा इव वाजिनः । तुष्टचित्ताः सुपुष्टाङ्गाः, प्रेक्ष्यन्ते तत्र भूभुजा ॥५॥ त्रिभिर्विशेषकम्
ततः शोणमणीं दृष्ट्वा, रोहणश्रेणिकां भुवम् । तृतीयामारुरोहासौ, विस्मयोत्फुल्ललोचनः ॥६॥
शास्त्रार्थनिपुणास्तत्र, सूपकारा बुधा इव । चक्रू रसवतीभेदान्, वृत्तिग्रन्थानिवोज्ज्वलान् ॥७॥
सुगन्धिश्वेतसच्छालि-दालिप्रभृतिभोजनम् । प्राज्यमाच्छादित स्वान्तं, निर्ममुः केऽपि वल्लवाः ॥८॥
विशालान्यैशलानच्छा-नखण्डान्मण्डकानपि । क्वचिन्निर्मापयामासु-श्चन्द्रमण्डलसन्निभान् ॥९॥
व्यञ्जनानि रसाढ्यानि, विनिर्माय प्रभूतशः । केऽपि सञ्चस्करुः क्वापि, काव्यानि कवयो यथा ।१०।

हैयङ्गवीनहविषा परिपच्य केचित्, पक्वान्नभेदनिकरान्विदधुर्विचित्रान् ।
केचिन्मनोनयनमोदकमोदकांश्च, वद्धोत्करान् हिमगिरेरिव-चारुकूटान् ॥ ११ ॥

१ पर्यन्तस्योपरितनीं भूमीम् २ टीकाग्रन्थान् ३ सूदाः

स्थूलपूगीफलान्याशु दलीकृत्य समांशतः । सान्द्रंचन्द्रोदकेनार्द्रीचक्रिरे तन्नियुक्तकाः ॥ १२ ॥
प्रत्यग्रैर्नागवल्लीनां, विशालैः संदलैर्दलैः । बबन्धुर्वीटकान्युच्चै—स्तद्व्यापारनियोगिनः ॥ १३ ॥
कस्तूरिकाकुङ्कुमचन्दनानां, कर्पूरपूरेण विमिश्रितानाम् । विलेपनैर्बिभ्रति भाजनानि, केचिन्नरास्तद्विषये नियुक्ताः ।१४।
एवंविधं तृतीयाया, भूमेः पीठं व्यलोकयत् । चतुर्थीं रिष्टसोपाना—मारुरोह भुवं नृपः ॥ १५ ॥
तत्र प्रधानलोकानां, विशालाः स्वापमण्डपाः । चक्षुर्मनोहरैश्चित्रै—श्चित्रिताश्चित्रकर्मभिः ॥ १६ ॥
आकीर्णा वर्यपर्यङ्कै—र्विस्तीर्णैर्विविधैस्तथा । नवनीतमृदुस्पर्श—हंसतूल्युपधानकैः ॥ १७ ॥
कान्तरत्नमयस्तम्भा, वैडूर्यमणिकुट्टिमाः। विरेजिरे निर्जराणा-मुपपातगृहा इव ।१८।त्रिभिर्विशेषकम्
उपवेशनशालाश्च, स्पष्टस्फाटिकवेदिकाः । रत्नसिंहासनस्वर्णपादपीठोपशोभिताः ॥ १९ ॥
नानामणिशिलाबद्ध—विशालधरणीतलाः । निर्जराणां महास्थान—समा इव बभुस्तराम् ॥२०॥युग्मम्
द्वीपान्तरागतैः सूर्यै—र्नूनं द्रष्टुं गृहश्रियम् । रेजुः प्रत्याहृतस्वर्ण—स्थालैर्भोजनमण्डपाः ॥ २१ ॥
रूप्यस्वर्णादिनिर्वृत्तैः, रम्यैः कच्चोलकादिभिः । आसनैर्विविधैश्चापि, तेऽभितो रेजिरे तदा ॥ २२ ॥
रत्नकाञ्चनसोपानं, जात्यस्वर्णमहीतलम् । शातकुम्भमयस्तम्भ—न्यस्तवैडूर्यतोरणम् ॥ २३ ॥
पद्मरागेन्द्रनीलादि—मयार्हद्बिम्बभूषितम् । गृहस्योत्तरपूर्वस्यां, वर्तते चैत्यमन्दिरम् ॥२४॥युग्मम्॥

---

खण्डीकृत्य समभागेन २ गाढकर्पूररसेन. ३ तमालपत्रसहितैः, ४ पङ्क्तिस्थापितसुवर्णस्थालैः ५ शातकुम्भ सुवर्णम्.

पूर्वस्यां चारुरत्नानि विद्यन्ते कोशवेश्मसु । तानि यान्यन्धकारेऽपि, समुद्योतं वितन्वते ॥२५॥
तत्र श्रेणिकराजस्य, सिंहासनमदापयत् । चेल्लणायाः पुनर्भद्रा—सनं भद्रा स्वपूरुषैः ॥२६॥
तत्राभयकुमारादि—मन्त्रिणामप्यदापयत् आसनानि यथौचित्यमौचित्यं हि परो गुणः ॥२७॥
ततः सुखासनासीनः, श्रेष्ठिनीं क्षितिपोऽवदत् । शालिभद्रः स्फुरद्भद्रो, भद्रे क्वास्ते सुतस्तव ॥२८॥
स्वामिन् युष्मत्पदाम्भोजो–पचारे विहिते सति । स्वस्वामिदर्शनायाशु, शालिभद्रः समेष्यति ॥२९॥
परमद्य प्रमोदाय, प्रभो मेऽनुग्रहं कुरु । स्नानादिभिरिति प्राह, भद्रा श्रेणिकभूपतिम् ॥३०॥
सदोपरोधशीलत्वा–त्तद्वचोऽमंस्त भूपतिः । महान्तोऽगण्यदाक्षिण्य–पुण्यात्मानो भवन्ति यत् ॥३१॥
विविक्ते चेल्लणां स्थाने, स्थापयित्वा विलासिनीः । तस्या आज्ञापयद्भद्रा—ऽभ्यङ्गोद्वर्तनहेतवे ॥३२॥
लक्षपाकादिकं तैलं निर्मलं घ्राणतर्प्पणम् । चूर्णानि च सुगन्धीनि, सूक्ष्माण्यतिमृदूनि च ॥३३॥
प्रवरद्रव्यसंयोग–निर्मितानि विचक्षणैः । ताभ्यः समर्प्पयामास, श्रेष्ठिनी विपुलाशया ॥३४॥ युग्मम्॥
कृत्वाभ्यङ्गं शरीरेऽस्या, हस्तैः कमलकोमलैः । संवाहनामिमांश्चक्रु—श्चेल्लणायाश्चतुर्विधाम् ॥३५॥
शश्वत्पिष्टातकक्षोदै—र्निर्मलैस्तदनन्तरम् । तस्या उद्वर्तयामासु–र्विलासिन्योऽभितस्तनुम् ॥३६॥
इत्थं राजाऽपि तद्वाचा, मर्दयित्वाऽङ्गमर्दकैः । सुकुमारकरैश्छेकैरुद्वर्तनमकार्यत ॥३७॥
विशालामलशुभ्रांशु–कान्तरत्नमहाश्मभिः । निर्मितारोहणश्रेणी–स्पष्टस्फाटिककुट्टिमाम् ॥३८॥

पञ्चमीमारुरोहासौ, सार्द्धं चेल्लणया भुवम् । श्रीकण्ठ इव पार्वत्या, कैलासाचलचूलिकाम् ॥३९॥युग्मम्॥
सर्वर्तूद्भवपुष्पौघ—फलसञ्चयसङ्कुलम् । सच्छायनागपुन्नाग—बकुलाशोकचम्पकम् ॥ ४० ॥
ऊर्ध्वं रुद्धार्कचन्द्रांशु, स्पृहणीयं दिवोकसाम् । तदा मर्त्याधिभूस्तत्रा-लुलुके नन्दनं वनम् ॥४१॥युग्मं॥
आच्छादनशिलासूच्चैः, स्तम्भदेशेषु भित्तिषु । न्यस्तरत्नकरध्वस्त-ध्वान्ते तत्र वनान्तरे ॥४२॥
चन्द्रकान्तमणिग्राव-क्लृप्तपर्यन्तवेदिका । चञ्चत्काञ्चनसोपान-शालिनी विपुलाऽऽयता ॥४३॥
संचारितापनीताम्बुः, कीलिकादिप्रयोगतः । नानारत्नौघनिर्वृत्त—प्रवेशोन्नततोरणा ॥४४॥
क्रीडापुष्करणी रम्या, रमणीयतया ध्रुवम् । निरस्तसुमनोवापी, विमला शुशुभेतराम् ॥४५॥ चतुर्भिश्च कुलकं ॥
तस्यां घनरसक्रीडां, कर्तुं द्रागवतेरतुः । चेल्लणाश्रेणिकौ सिन्धौ, लक्ष्मीनारायणाविव ॥४६॥
पूर्वं कुङ्कुमक्लृप्ताङ्ग—रागं तन्मिथुनं तरत् । चक्रद्वन्द्वमिवोत्तप्त—स्वर्णचूर्णप्रभं बभौ ॥४७॥
ततोऽवदातसर्वाङ्ग—मारक्तचरणाधरम् । धारयामास तद्द्वन्द्वं, राजहंसयुगश्रियम् ॥४८॥
अभ्रमूस्वर्द्विपद्वन्द्व—मिव तन्मिथुनं तदा । करोल्लालनतोऽम्भोभिः, परस्परमवाकिरत् ॥४९॥
क्वचिद् भूपभुजादण्डा-स्फालनादुच्छ्रितोर्मिभिः । हृत्वा स्म प्राप्यते तीरं, रिक्ता नौरिव चेल्लणा ॥५०॥
चेल्लणोन्नतवक्षोज—क्षोभितोदकवीचिभिः । भूपोऽपि प्रापि तत्तीरं, पोतो नीरनिधाविव ॥५१॥

१. नरेन्द्र. २ तिरस्कृतदेववापी.

कुर्वाणस्य जलक्रीडा—मेवं भूपस्य निर्भरम् । सन्मुद्रारत्नमङ्गुल्याः, पपातालक्षितं जले ॥५२॥
यावन्निरीक्षते ताव—दङ्गुलीं स्वां नराधिपः । पश्यति स्म विशोभां तां, च्युतरत्नामिवोर्मिकाम् ॥५२॥
ततस्तमतिसम्भ्रान्तं, भूपतिं तरलेक्षणम् । दृष्ट्वा भद्राऽप्यसम्भ्रान्ता, प्राह किं किमिति प्रभो ॥५३॥
मुद्रारत्नं ममाङ्गुल्याः, परिभ्रष्टमलक्षितम् । निर्भरं क्रीडतो वाप्या—मिति भद्रां नृपोऽवदत् ॥५४॥
मुद्रारत्नोपलम्भार्थं, भद्रा दासीमथादिशत् । क्रीडापुष्करिणीनीरं, हले सञ्चारयान्यतः ॥५५॥
ततश्चकर्ष पानीयं, कीलिकाकर्षणेन सा । सद्यः सस्फुरमन्त्रेण, सिद्धमन्त्रेव योगिनी ॥५६॥
राजाऽलङ्काररत्नांशु—चित्रं पुष्करिणीतलम् । पयःपूर्णमिवापश्य—द्गतेऽप्यन्यत्र वारिणि ॥५७॥
मुद्रारत्नं च तत्स्वर्णमणिभूषान्तरस्थितम् । पिकपोतमिवाऽशोभं, चक्रवाकौघमध्यगम् ॥५८॥
यद्वा काकमिवाकान्तं, सुवर्णान्तर्व्यवस्थितम् । अङ्गारमिव निस्तेजो, ददर्श श्रेणिकः पुरः ॥५९॥युग्मं॥
प्रासीसरत्करं यावदादातुं नृपतिस्तकत् । स्नुषानिर्माल्यमस्पृश्य—मिति भद्रा न्यवारयत् ।६०॥
ततश्च ज्ञापयामास, श्रेष्ठिनी निजचेटिकाम् । क्षालयित्वा हले मुद्रा—रत्नमर्पय भूभुजे ॥६१॥
तदैवादाय साथ चेटी, क्षालयित्वाऽमलैर्जलैः । मुद्रारत्नमदात्तस्मै, शीघ्रमालिप्य चन्दनैः ॥६२॥
शालिभद्रवधूटीनां, निर्माल्याभरणान्यसौ । दृष्ट्वा सविस्मयो भूप—श्चेल्लणामुखमैक्षत ॥६३॥
रत्नकम्बलसत्कानि, पादप्रोञ्छनकान्यहो । कियन्तेऽत्र पुरे स्त्रीणां नैगमानामपि प्रभो ॥६४॥

धराधिनाथभार्याया, अपि प्रावरणाय सः । न मेऽस्तीति पुरावादी–रत्र किं वक्ष्यसि प्रिये ॥६५॥
पुष्करिण्याः कृतक्रीडः, समं चेल्लणया नृपः । ऐरावत इवाऽभ्रम्वा, सलीलमथ निर्ययौ ॥६६॥
गन्धकापयिकावस्त्र–मुपानाय्याशु भद्रया । निर्जला कार्यते तस्य, तनुर्वापी यथा पुरा ॥६७॥
विलेपनमुपानीय, गोशीर्षादिकमुत्तमम् । परिवारसमेतस्य, विलिप्याङ्गं महीपतेः ॥६८॥
नानादेशोद्भवैर्वस्त्रै–श्चारुचीनांशुकादिकैः । नरेन्द्रं सपरीवारं, श्रेष्ठिनी पर्यधापयत् ॥६९॥
अत्रान्तरे च विज्ञप्तः, सूपकारेण भूपतिः । प्रस्तावो देवपूजायाः, समभूदधुना प्रभो ॥७०॥
अवतीर्य धराधीश–श्चतुर्थीमथ भूमिकाम् । द्वारमुद्घाटयामास, तीर्थकृच्चैत्यसद्मनः ॥७१॥
तत्रार्हत्प्रतिमाः स्वर्ण–रत्नमय्यो मनोहराः । दृष्ट्वाऽतिमुदितो भूप–श्चिन्तयामास चेतसि ॥७२॥
धन्यस्तावदयं शालि—भद्रो भद्रात्मजः सुधीः । यस्येदृक्चैत्यसामग्री, लोचनानन्ददायिनी ॥७३॥
धन्योऽहमीदृशा यस्य, वणिजः पुण्यभाजनम् । धार्मिका धनवन्तो य–त्तत्सुवर्णस्य सौरभम् ॥७४॥
पुष्पदन्तात्पुरो वाम–स्कन्धपृष्ठे दशा दधत् । एकशाटयुत्तरासङ्गं, विदधे वसुधाधवः ॥७५॥
बध्वाञ्जलिर्नमन्नुच्चै–र्जयेति मुहुरुद्गृणन् । प्रविवेश विशामीश—स्तीर्थकृद्वेश्मनोऽन्तरम् ॥७६॥
अत्रान्तरे निजैर्मर्त्यैर्भद्रा भद्राभिलाषिणी । पूजोपकरणं सर्वं, पुष्पादिकमढौकयत् ॥७७॥
करप्रक्षालनं कृत्वा मुखकोशं विधाप्य च । निर्माल्ययित्वा सर्वार्चाः, सरम्भ्रममममार्जयत् ॥७८॥

ततः स्नात्रं जिनार्चानां, स्वर्णकुम्भैर्महीपतिः । स्वयं शक्र इवाकार्षीत्, सहर्षो गन्धवारिभिः ॥ ७९ ॥
गोशीर्षचन्दनेनाङ्ग-रागं कृत्वा विशेषतः । सद्गन्धैर्विविधैः पुष्पै-र्भूपस्ताः पर्यपूपुजत् ॥ ८० ॥
कालागुर्वादिसद्द्रव्य-निष्पन्नं धूपमुत्तमम् । दग्ध्वा सुगन्धमाधत्त, गर्भागारं नरेश्वरः ॥ ८१ ॥
अखण्डैस्तन्दुलैः कुन्द-कोशसब्रह्मचारिभिः । मङ्गलानि लिलेखाष्टौ, स्पष्टं तुष्टः पुरो नृपः ॥ ८२ ॥
पूजामेवं विधायोच्चैः, सन्त्यज्यार्हदवग्रहम् । दक्षिणेन जिनार्चाया-स्तस्थौ श्रेणिकभूपतिः ॥ ८३ ॥
अवग्रहश्च सिद्धान्ते, त्रिविधो गणधारिभिः । जघन्यमध्यमोत्कृष्ट—भेदेन प्रतिपादितः ॥ ८४ ॥
षष्टिहस्तप्रमाणेऽसा-वुत्कृष्टोऽवग्रहो मतः । जघन्यो नवहस्तस्तु, ज्ञेयः शेषस्तु मध्यमः ॥ ८५ ॥
निरीक्ष्य चक्षुषा भूमिं, वस्त्रान्तेन प्रमृज्य च । उत्तरासङ्गमाधत्त, पूर्ववन्नरपुङ्गवः ॥ ८६ ॥
ततो ननाम पञ्चाङ्ग—प्रणिपातेन भूपतिः । जानुद्वयं करद्वन्द्व-मुत्तमाङ्गं च पञ्चमम् ॥ ८७ ॥
ततः संवेगजनकै—रसमानगुणस्तवैः । नृपतिः स्तोतुमारेभे, त्रैलोक्याधिपतिं जिनम् ॥ ८८ ॥
त्वया रागोरगो नाथ, वक्रः क्रूरोऽतिदारुणः । विनतानन्दनेनेव, सत्पक्षेण न्यहन्यत ॥ ८९ ॥
द्वेषं द्वेषणमत्यन्त-रोषणं भीषणं भवान् । अतिप्रौढबलः स्वामिन्, महाभट इवाजयत् ॥ ९० ॥
प्रभो मोहपिशाचोऽयं, छलान्वेषी न्यगृह्यत । त्वया सत्स्फुरमन्त्रेण, मान्त्रिकेणेव धीमता ॥ ९१ ॥

---

१ गरुडेन.

कषाया हन्तुमारब्धा–स्त्वयाऽनन्तानुबन्धिनः। मिथ्यात्वमाश्रिताः स्वामिं–स्तेनैव सह जघ्निरे ॥ ९२ ॥
स्वामिन्नष्टमहाप्राति–हार्यार्चा त्वयि राजते । कर्माष्टकक्षये शक्तिं, ब्रुवाणेव तवाद्भुताम् ॥ ९३ ॥
वागेकानेकसन्देहान्, देहिनां हन्ति ते विभो । भवादृशानां महिम, कः परिच्छेतुमीश्वरः ॥ ९४ ॥
यन्न प्रकाश्यतेऽर्काद्यै–र्वस्तूद्दामस्वधामभिः । तदप्यालोक्यते तेन, ज्ञानेन निखिलं तव ॥ ९५ ॥
भवन्ति हि प्रसादात्ते, सर्वाभीष्टार्थसिद्धयः । तत्प्रसीद ममाभीष्टं, पूर्णभद्रं कुरु द्रुतम् ॥ ९६ ॥
इत्थं स्तुत्वा जिनाधीश–मसमानगुणंस्तवैः । पञ्चभिर्दण्डकैश्चैत्य–वन्दनं च प्रचक्रमे ॥ ९७ ॥
वामं जानुं समाकुञ्च्य, दक्षिणं न्यस्य भूतले । पुरो वस्त्राञ्चलेनास्यं, स्थगयन्त्रचिताञ्जलिः ॥ ९८ ॥
न्यस्तदृष्टिर्जिनार्चायां, सुव्यक्तं योगमुद्रया । शक्रस्तवमसौ भूपो, भक्त्या शक्र इवापठत् ॥९९॥युग्मं
प्रतिक्रामत्यसावीर्या–पथिकां विधिना ततः । पुनः शक्रस्तवं पूर्व–रीत्याऽपाठीन्नरेश्वरः ॥ १०० ॥
रोमाञ्चितवपुर्भूपो, योगमुद्रादिपूर्वकं । वक्ष्यमाणक्रमेणाथ, विदधे चैत्यवन्दनाम् ॥ १ ॥
तत्राद्या जिनमुद्राख्या, योगमुद्राऽभिधाऽपरा । मुक्ताशुक्तिस्तृतीया तु, तिस्रो मुद्राः प्रकीर्तिताः ॥ २ ॥
शक्रस्तवे योगमुद्रा, जिनमुद्रा तु वन्दने । मुक्ताशुक्त्यभिधा मुद्रा, प्रणिधानविधौ भवेत् ॥ ३ ॥
कृपापरायणस्वान्ताः, श्रीमन्तः पूर्वसूरयः । पञ्चभिर्दण्डकैश्चैत्य–वन्दनामेवमूचिरे ॥ ४ ॥
शक्रस्तवस्तावदिहादिदण्डक–स्तस्याभिधाने विधिरेष गीतः । भून्यस्तजानुः करसम्पुटी च, स न्यस्तदृष्टिर्जिनबिम्ब एषः ५

ततः प्रतिक्रामति साधुरीर्यां, श्राद्धोऽपि वा यद्भणितं श्रुतेऽदः। श्रीचैत्यसाध्वालयभक्तपान-कृत्येष्विहेर्यां, परिशोधयन्ति॥

शक्रस्तवं पठेदादौ, ततोऽभ्युत्थाय संयतः। पादयोर्जिनमुद्रां च, योगमुद्रां च हस्तयोः ॥ ७ ॥

विधाय सूत्रमाकृष्य, चैत्यवन्दनसंज्ञितम् । कायोत्सर्गं ततः कुर्यान्नमस्कारं च चिन्तयेत् ॥ ८ ॥

परमेष्ठिस्तुतिं दत्त्वा, बिम्बनाथस्तुतिं ततः । लोकोद्योतकरं ब्रूयात्कायोत्सर्गस्तुतिं ततः ॥ ९ ॥

ज्ञानस्तवं समाकृष्य, कुर्यादुत्सर्गमादृतः । चिन्तयेच्च नमस्कारं, स्तुतिं दद्याच्छ्रुतस्य तु ॥ १० ॥

सिद्धस्तवेऽपि चोत्सर्गः, स्तुतिश्च परमेष्ठिषु । वैयावृत्त्यकरादेश्च, स्तुतिः शक्रस्तवस्तथा ॥ ११ ॥

एतेनैव प्रकारेण, पुनरावर्त्य वन्दयेत् । सर्वचैत्ययतीन्नत्वा, स्तोत्रं पठति सादरम् ॥ १२ ॥

शक्रस्तवं पुनर्भक्त्या, ततः पठति पञ्चमम् । प्रणिधानं ततः कुर्या—द्भवाशंसा विवर्जितः ॥ १३ ॥

मोक्षाशंसा तु यन्नोक्ता, निदानं बोधिलाभवत् । पूर्वसूरिभिराख्याता, सामाचारीयमीदृशी ॥ १४ ॥

न निषिद्धा च गीतार्थै-राश्रिता च बहुश्रुतैः । निरवद्या ततो मान-मन्येषामपि देहिनाम् ॥ १५ ॥

फलमेतस्य सर्वस्य, मोक्ष एव न चेदसौ । स्वर्भोगाः सुकुले जातिः, प्रव्रज्या मोक्ष एव तु ॥ १६ ॥

इह लोकेऽपि चैतस्य, फलमाहुर्मनीषिणः । राजतस्करवह्न्यादे-र्न हानिरुपजायते ॥ १७ ॥

पूज्यः सतां मतो राज्ञां, भोगी स्वामी च सम्पदाम् । पुत्रदारप्रियो नित्यं, श्रेष्ठकर्मानुशीलकः ॥ १८ ॥

---

१ प्रमाणम्

वन्दकः स्यादगारी चे–द्थापि यतिपुङ्गवः । तस्यापि भूमिकौचित्या–दनुत्कलमिदं भवेत् ॥ १९ ॥
कृतश्रीतीर्थनाथार्चा–स्नानार्चाचैत्यवन्दनः । धन्योऽहमिति मन्वान—श्चैत्यतो निरगान्नृपः ॥ २० ॥
सपरिवारमामन्त्र्य, तदैवादरतः स्वयम् । उपावीशदुर्वीशं, भद्रा भोजनमण्डपे ॥ २१ ॥
तत्र तावत्समानीत–मादितश्चर्वणं प्रभोः । रूप्यकचोलकेषूच्चैः, कृत्वा नानाविधं बहु ॥ २२ ॥
नालिकेरीफलास्थूला—चिरन्तनदलोत्करात् । चारुकर्पूरसन्मिश्र—खण्डपिण्डदलावली ॥ २३ ॥
पक्कदाडिमबीजानि, राजादनफलानि च । रसाढ्या मृदुमृद्वीकाः, काव्यमाला इवोज्ज्वलाः ॥ २४ ॥
ईदृग्विधं चर्वणीय–मन्यदप्युपढौकितम् । सर्वेभ्योऽपि यथौचित्यं, ददौ तत्पृथिवीपतिः ॥ २५ ॥
सुसंस्कृतेक्षुखर्जूर—नारङ्गाम्रफलादिकम् । भूयिष्ठ श्रेष्ठिनी श्रेष्ठं, ततश्चोष्यमढौकयत् ॥ २६ ॥
सा पक्वशर्करोत्पन्नं, चातुर्जातकसम्भृतम् । बुभुक्षोद्दीपनं तीक्ष्णं, ततो लेह्यमनाययत् ॥ २७ ॥
अशोकवर्त्तिकासेवा-खण्डखाद्यकमोदकान् । घृतपूर्णांश्च सुस्निग्धान्, फेणिकाः सुकुमारिकाः ॥ २८ ॥
इत्यादिकं च पक्वान्नं, नानाभेदं प्रभूतशः । ततश्चानाययामास, श्रेष्ठिन्यौदार्यशालिनी ॥ २९ ॥
ततः सूपोदनं निस्त्वक्, वरान् कलमतन्दुलान् । सद्गन्धं शारदं सर्प्पि—र्नानाशालनकानि च ॥ ३० ॥
अनेकद्रव्यसंयोग—निष्पादितमनोहरा । उपनीता ततः पेया, परिणामविधायिनी ॥ ३१ ॥
भाजनान्यपनीतानि, ततो दक्षिणतः स्थिते । हस्तप्रक्षालनं चक्रुः, श्रेणिकाद्याः पतद्गृहे ॥ ३२ ॥

ततो नानाविधा दन्ते, विच्छित्तीरतिबन्धुराः । तद्भाजने निचिक्षेप, सा शालीन्मण्डकादि च ॥ ३३ ॥
भुक्ते सत्यपनीतानि, भाजनानि पुनस्ततः । हस्तप्रक्षालनं सर्वे, पूर्ववच्चक्रिरे ततः ॥ ३४ ॥
कर्पूरशर्करामिश्र—मविस्रं श्रेष्ठिनी ततः । सत्पयः पारिहट्टीना—मद्धावर्त्तमुपानयत् ॥ ३५ ॥
नृपप्रभृतिसर्वेषां, पीते दुग्धे सति क्षणात् । अदत्ताचमनं भद्रा, दुग्धान्तं भोजनं यतः ॥ ३६ ॥
सर्वे ते जगृहुर्दन्त—शलाकां तदनन्तरम् । ततः सुगन्धचूर्णेन, हस्तोद्वर्त्तनमादधुः ॥ ३७ ॥
साऽऽनाय्याम्भस्ततः कोष्णं, तेषां हस्तानधावयत् । करेभ्यो धान्यदध्यादे—र्गन्धापगमहेतवे ॥ ३८ ॥
हस्तनिर्माजनाहेतो—र्ददौ भद्राऽतिकोमलम् । गन्धकाषायिकावस्त्रं, समुत्तस्थौ नृपस्ततः ॥ ३९ ॥
विस्तीर्णे श्रेष्ठिनी प्रेक्षा—मण्डपे नृपतेस्ततः । रत्नविद्योतिताशास्यं, सिंहासनमदापयत् ॥ ४० ॥
चारुकर्पूरकस्तूरी—चन्दनादिविलेपनम् । पुष्पताम्बूलसंयुक्त—मानीतं भद्रया ततः ॥ ४१ ॥
ततो निदग्धनर्तक्या, गायनैर्वादकैरपि । प्रेक्षणं कर्तुमारेभे, सुरसं गीतकोपमम् ॥ ४२ ॥
अत्रान्तरेऽवदद् भूपो, भद्रे क्वास्ति तवात्मजः । तमहं द्रष्टुमिच्छामी—क्षणानन्दक्षपाकरम् ॥ ४३ ॥
स्वामिन्नेष समायाति, शालिभद्रो ममाङ्गजः । युष्मत्पादाम्बुजं द्रष्टु—मित्युदित्वा महीपतिम् ॥ ४४ ॥
एकान्तरितशोणाश्म—स्फटिकारोहणावलिम् । रक्तश्वेताम्बुज—श्रेणिं, वहन्तीमिव लक्ष्मिंनीम् ॥ ४५ ॥

१ निश्रेणिम्

हर्म्यावतंसशोभायै, नृपागममहोत्सवे। आरुरोहाङ्गजाहूत्यै, श्रेष्ठिनी षष्ठभूमिकाम्।४५।त्रिभिर्विशेषकम्
आगच्छन्तीं समालोक्य, शालिभद्रः स्वमातरम् । सम्मुखीनां समुत्तस्थौ, विनीता हि कुलोद्भवाः ॥
प्रणम्य चरणौ तस्याः, स प्रोचे रचिताञ्जलिः । मेघगम्भीरवाग्मातः, किमागमनकारणम् ॥ ४७ ॥
चतुर्थीं भूमिमागच्छ, वत्साऽतुच्छमतेऽधुना । श्रेणिकं तत्र पश्येति, जगाद जननी सुतम् ॥ ४८ ॥
समर्घं वा महार्घं वा, जानास्यम्ब त्वमेव हि । करिष्ये किमहं तत्रे-त्युवाच जननीं स तु ॥ ४९ ॥
शालिभद्रं ततो भद्रा, प्रत्युवाच प्रियम्वदा । क्रेतव्यं वस्तु नो किञ्चि-त्तद्वत्स स्वस्थमानस ॥ ५० ॥
स्वाम्यसौ भवतोऽन्येषा-मप्यागात्तव मन्दिरम् । श्रेणकः सद्गुणश्रेणि-स्त्वद्दर्शनकुतूहली ॥ ५१ ॥
ततस्तद्वचनं श्रुत्वा, शालिभद्रो व्यचिन्तयत् । ममापीहाऽपरः स्वामी-त्यश्रुतं श्रूयते वचः ॥ ५२ ॥
अथवाऽकृतसम्पूर्ण-धर्माणां जन्मिनामिह । प्राप्तायां भोगसम्पत्ता-वपि स्यात्परतन्त्रता ॥ ५३ ॥
तस्मादस्मादृशां काम-भोगजम्बालसङ्गिनाम् । युक्ताऽन्यतन्त्रता गर्ता शूकराणामिवाऽवनौ ॥ ५४ ॥
अत एव महात्मानो, मुनयो भोगसम्पदः । विहाय जगृहुर्दीक्षां, सर्वदुःखक्षयावहाम् ॥ ५५ ॥
तदमीभिरलं भोगै-र्भोगिभोगोपमैर्मम । ग्रहीष्यामि व्रतं तूर्णं, श्रीवीरस्वामिसन्निधौ ॥ ५६ ॥
एवमत्यन्तसंवेग-भावितात्मा महामनाः । स मातुरुपरोधेना-वतरीतुं प्रचक्रमे ॥ ५७ ॥

१ जम्बाल. पङ्कः

सद्यः क्लृप्ताङ्गरागोऽसौ, वृन्दारकविलेपनैः । भव्यैर्दिव्यैरलङ्कारैः, सर्वाङ्गेषु विभूषितः ॥ ५८ ॥
प्रधानैर्देवदूष्यैश्च, कृता कंल्पप्रसाधनः । एवं परिष्कृताङ्गाभिः, पत्नीभिरभितो वृतः ॥ ५९ ॥
शारदः किमयं चन्द्र–स्ताराभिः परिवारितः । सलीलगमनः किंवा, देवदन्ती वशान्वितः ॥ ६० ॥
किमु कल्पलतायुक्तो, जङ्गमः कल्पपादपः । अप्सरोभिर्वृतः शक्रः, स्वर्गादवतरत्यसौ ॥ ६१ ॥
जनयन्निति सन्देहं, जनानां श्रेष्ठिनन्दनः । रूपनिर्जितकन्दर्प—श्चतुर्थीमवातरत् ॥ ६२ ॥ पञ्चभिःकुलकम् ॥
स्फुरत्परिमलोद्गार—वासिताशेषदिग्मुखं । सभार्यं तं समायान्तं, निर्वर्ण्याचिन्तयन्नृपः ॥ ६३ ॥
अहो सुचीर्णपुण्यानां, किमसाध्यं शरीरिणां । वणिग्मात्रोऽप्यसौ येना–नुकरोति सुरश्रियम् ॥ ६४ ॥
ततश्चाभ्यर्णमभ्येत्य, समं चेल्लणया नृपम् । प्रणनाम सभार्योऽपि, शालिभद्रो महाभुजः ॥ ६५ ॥
समालिंग्य निजोत्सङ्गे, भूपतिस्तं न्यवीविशत् । द्वात्रिंशत्तत्सधर्मिण्यो, निषेदुरुपचेल्लणम् ॥ ६६ ॥
राज्ञा विस्मितचित्तेन, जल्पितोऽपि न जल्पति । किन्तु म्लनास्यपद्मोऽसौ, बाष्पापूर्णेक्षणोऽभवत्॥
ततः क्षणान्तराद्भद्रा, प्राहैनं विसृज प्रभो । मानुष्यं माल्यगन्धादि, नैवैष सहते यतः ॥ ६८ ॥
वर्णचूर्णप्रसूनानि, दिव्यानि प्रतिवासरम् । सर्वं सम्पादयत्यस्य, देवभूयं गतः पिता ॥ ६९ ॥
भुंक्ते स्वामिन्नयं देव–कुरूणां फलसञ्चयम् । पानीयमपि तत्रत्यं, पिबत्यमरढौकितम् ॥ ७० ॥

१ अकल्पो वेशः

नाथैकदिनभुक्तानि, वस्त्राण्याभरणानि च । नोपभुंक्ते सपत्नीको, द्वितीयदिवसेप्यसौ ॥ ७१ ॥
ततो न क्षमते स्थातु-मयं हि सुखलालितः । प्रसह्य स्वामिनः पादा, विसृजन्त्वविलम्बितम् ॥ ७२ ॥
ततश्च श्रेणिकः प्राहा—नभिज्ञा (ज्ञां) चेल्लणा (णां) ध्रुवम् । अपूर्वः कोऽपि सत्पुण्य-महिमा हि महीयसाम् ॥ ७३ ॥
'अहो सत्पात्रदानस्य, कस्याप्येवमिदं फलम् । तपसो वा सुचीर्णस्य, यदेवं किङ्कराः सुराः ॥ ७४ ॥
तत्त्वं वत्स समुत्तिष्ठ, गच्छ स्थानं समीहितम् । आरुरोह ततः शालि-भद्रोऽसौ षष्ठभूमिकाम् ॥ ७५ ॥
श्रेणिकोऽपि समुत्थाय-जगामाधस्तनीं भुवम् । ततः सलीलगमनः, कुञ्जरः पर्वतादिव ॥ ७६ ॥
ततो वस्त्राणि रत्नानि, हस्तिनोऽश्वान् रथानपि । प्राभृतं ढौकयामास, भद्रा श्रेणिकभूभुजे ॥ ७७ ॥
श्रेणिकं तदगृह्णन्तं, प्राह भद्रातिगौरवात् । न मे देव मनःस्वास्थ्य—मेवमेवोपपद्यते ॥ ७८ ॥
तत्सद्योऽनुगृहाणैतदङ्गीकरणतोऽत्र मां । मन्त्रिणोऽप्यूचिरे देव, भद्राया क्रियतां वचः ॥ ७९ ॥
ततस्तदुपरोधेन, मन्त्रिवाक्याच्च तन्नृपः । प्रतिजग्राह सन्तो हि, स्युर्दाक्षिण्यपरायणाः ॥ ८० ॥
ततः सेचनकारूढः, समं चेल्लणया नृपः । अमात्यादिपरिवारो, जगाम निजमन्दिरम् ॥ ८१ ॥
भद्रा सङ्गोपयामास, हट्टशोभांशुकादिकम् । चातुरी परमैषा हि, यत्कालोचितकारिता ॥ ८२ ॥
यावच्छ्रेष्ठिसुतस्तस्थौ, भोगतृष्णापराङ्मुखः । तावत्कल्याणमित्रेणा-भाष्यतागत्य केनचित् ॥ ८३ ॥
समुद्र इव गम्भीरो, गुरुसत्त्वसमन्वितः । सुमेरुरिव मध्यस्थः, स्थैर्यवान् विबुधप्रियः ॥ ८४ ॥

अहःपतिरिवौजस्वी, विध्वंसिततमस्ततिः । शरच्चन्द्र इवामन्दा—नन्दसन्दोहवर्द्धनः ॥ ८५ ॥
गन्धहस्तीव विक्षिप्त—परवादिमतङ्गजः । मृगेन्द्र इव दुर्धर्षो—ऽन्येषां प्रौढपराक्रमः ॥ ८६ ॥
राजहंस इवात्यन्त—शुद्धपक्षद्वयोदयः । पुंस्कोकिल इव श्रोतृ—श्रवःसुखकरध्वनिः ॥ ८७ ॥
महापृथ्वीपतिरिव, प्रधानविपुलक्षमः । प्रावृड्धाराधर इव, निर्वापितमहीतलः ॥ ८८ ॥
मेघनिर्घोषगम्भीर—घोषोत् घोरतपोनिधिः । धर्मघोषोऽभिधानेन, सूरिः सूरिगुणोत्तरः ॥ ८९ ॥
साधुकल्पविहारेण, विहरन्नाययाविह । अवातरच्च सोऽद्यैव, चैत्ये गुणशिलाभिधे ॥ ९० ॥ सप्तभिःकुलकम् ॥
सान्तःपुरपरीवारः, समं नागरिकैरपि । निर्ययौ श्रेणिकस्तस्य, वन्दनार्थं महीपतिः ॥ ९१ ॥
तदाकर्ण्याशु सानन्दः, स्यन्दनं श्रेष्ठिनन्दनः । आरुह्य सपरीवारो, निर्ययावार्यचर्यया ॥ ९२ ॥
श्रेणिको नागराः श्रेष्ठि—नन्दनो भक्तिनिर्भरम् । दत्त्वा प्रदक्षिणास्तिस्रः, सूरिपादान् ववन्दिरे॥ ९३ ॥
सूरिः श्रीधर्मघोषोऽपि, चक्रिशक्रशिवश्रियाम् । कारणं सर्वजन्तुभ्यो, धर्मलाभाशिषं ददौ॥ ९४ ॥
यथास्थानोपविष्टेषु, सर्वेषु मुनिपुङ्गवः । देशनां कर्त्तुमारेभे, भवनिर्वेदकारिणीम् ॥ ९५ ॥
कोटिं वराटिकाहेतोः, कोऽपि हारयते यथा । वैडूर्याख्यं महारत्नं, भिन्द्यात्सूत्रकृते कुधीः॥ ९६ ॥
लोहार्थमथवा नावं, स्फोटयत्यबुधोऽम्बुधौ । गोशीर्षचन्दनं भस्म—कृते मुग्धा दहत्यलम् ॥ ९७ ॥
कर्पूरकाननं छिन्द्यात्कोद्रवावृतिहेतवे । धूतं जात्यसुवर्णं च, पूत्कृत्य गमयत्यधीः ॥ ९८ ॥

एवं मानुष्यकं जन्म, धर्म्मसाधनसंयुतम् । असारविषयासक्ता, मा नाशयत मानवाः ॥ १९९॥
विज्ञायावसरं श्रेष्ठि—सुतः संवेगवानसौ । अपृच्छन्मुनिनेतारं, प्रस्तावज्ञा हि धीधनाः ॥२००॥
स्वामिन्नान्यः कथ स्वामी, भवत्यत्र परत्र च । धनिनामपि नृणां हि, दुःखाय परतन्त्रता ॥२०१॥
जगदुः सूरयो धर्म्म—घोषास्तं श्रेष्ठिनन्दनम् । इहामुत्र न तेषां स्युः, स्वामिनः प्रव्रजन्ति ये ॥२०२॥
प्रत्युत स्वामिभावं ते, लभन्ते सर्वदैव हि । सुरासुरनरेन्द्राणां, सेव्यन्ते तैश्च सादरम् ॥२०३॥
यद्येवमहमप्यम्बां, गत्वा स्वं भगवन् गृहम् । अनुज्ञाप्य ग्रहीष्यामि, प्रव्रज्यामिति सोऽवदत् ॥२०४॥
प्रमादो न विधातव्यः, कर्तव्यः शीघ्रमुद्यमः । इत्युक्तं सूरिणा येन, धर्मस्य त्वरिता गतिः ॥२०५॥
व्याख्यावसाने नरपुङ्गवाद्याः, प्रणम्य सूरेश्चरणारविन्दम् । श्रीजैनधर्म्मश्रवणप्रमोदा—त्पूर्णचित्ता निजधाम जग्मुः॥२०६॥

इति श्रीधन्यशालिभद्रमहर्षिचरिते श्रीराजगृहे रत्नकम्बलवाणिजकागमनादिशालिभद्रगृहश्रीश्रेणिकसमागम-नकर्णकटुकान्यस्वाम्याकर्णनाविर्भूतभावनानन्तरकल्याणमित्रनिवेदितागमन श्रीधर्मघोषाचार्यसमीपधर्म-श्रवणपर्यन्त शालिभद्रवृत्तान्त व्यावर्णनो नाम चतुर्थः परिच्छेदः



## —अथ श्रीपञ्चमो परिच्छेदः प्रारभ्यते—

अथ श्रीश्रेष्ठितनयः, प्रणम्योचे स्वमातरम् । अद्य श्रीधर्म्मघोषाख्य—मुनीश्वरमुखाम्बुजात् ॥ १ ॥
धर्म्मो निश्शेषदुःखौघा—ङ्कुरपूरानलोपमः । निर्वाणसुखलाभस्यो—पायभूतः श्रुतो मया ॥ २ ॥ युग्मम्॥
स मह्यमरुचह्लादं, मातः! श्रीसूरिणोदितः । शर्कराघृतसम्मिश्रं, क्षुधितायेव पायसम् ॥ ३ ॥
भद्राह वत्स तद्भद्रं, यच्छ्रुतो रुचितश्च ते । धर्म्मोऽसावार्हतो यस्मा—त्पितुस्तस्यासि नन्दनः ॥ ४ ॥
इत्याकर्णितधर्माणं, शालिभद्रं निजाङ्गजम् । प्रशशंसेति भद्राऽपि, प्रमोदभरपूरिता ॥ ५ ॥
यद्येवं तर्हि मातस्त्वं, प्रसद्यानुमनुष्व माम् । गृहीत्वाऽहं परिव्रज्यां, विधास्याम्यात्मनो हितम् ॥ ६ ॥
आकर्ण्य कर्णकटुकं, वचः सूनोर्जनन्यथ । मूर्च्छया न्यपतद् भूमौ, सर्वाङ्गेष्वपि निस्सहा ॥ ७ ॥
ततः शीताम्बुना सिक्ता, व्यजनेन च वीजिता । सा लब्ध्वा चेतनामाशु, सुदीनवदनाम्बुजा ॥ ८ ॥
बाष्पबिन्दून्विमुञ्चन्ती, व्याहरद्गद्गदाक्षरम् । त्वमेको दुर्लभः सूनु—र्ममोदुम्बरपुष्पवत् ॥ ९ ॥
ततो यावदहं वत्स, करोमि प्राणधारणम् । मा गृहाण व्रतं ताव—दिति माताऽब्रवीत्सुतम् ॥ १० ॥
पुत्रः—पक्वाम्रफलवद्याति, जीवितं जन्मिनामतः । न ज्ञायतेऽत्र कः पूर्वं, को वा पश्चाद्विपद्यते ॥ ११ ॥
माता—सुरूपमरुजं तेऽङ्गं, लक्षितं च सुलक्षणैः । तद्वत्स लालयापूर्वै—र्भोगाङ्गैर्दैवताहृतैः ॥ १२ ॥
पुत्रः—अम्बाशुचिरयं कायः, शुच्यपीहांशुकादिकम् । दूषयत्यम्बु जीमूता—द्भवमूषरभूरिव ॥ १३ ॥

अकस्मादापतत्यस्मिन्, शरीरे रोगसन्ततिः । सरंधासन्ततिस्तीक्ष्णा, यथा स्वमधुमण्डपे ॥ १४ ॥
अपक्वघटवारीव, न विश्रम्भस्य भाजनम् । अत्यन्तासारतोपेतं, शरीरं देहिनामदः ॥ १५ ॥
प्रतिबन्धस्तदत्राम्ब, क्रियते को विवेकिभिः । केवलं धर्म आधातुं, युज्यते तेन मुक्तिदः ॥ १६ ॥
माता—द्वात्रिंशतानुरक्ताभिः, प्रेयसीभिरनिन्दितान् । भुङ्क्ष्व भोगान्युवा याव—त्तावद्वत्स गृहस्थितः ॥ १७ ॥
पुत्रः—अम्बाशुचिसमुत्थेषु, पर्यन्ते दारुणेषु च । को भोगेषु रतिं कुर्या—न्नरकासुखहेतुषु ॥ १८ ॥
माता—दुर्वर्णस्वर्णमाणिक्य—कांस्यदूष्यादिकोऽस्ति ते । आसप्तमकुलं याव—दर्थो दानादिषु क्षमः ॥ १९ ॥
इच्छद्भ्यो वाञ्छितं वत्स, यच्छातुच्छं महेच्छ तम् । यथारुचि विधेहि त्वं, विलासांस्तेन चाद्भुतान् ॥ २० ॥
पुत्रः—राजतस्करदायादा, मृत्युवैश्वानरादयः । सन्त्यस्य वैरिणस्तस्मा—त्कोऽर्थे मातर्विमुह्यति ॥ २१ ॥
माता—चक्षुभ्यामतिगम्भीर—स्तरणीयो महार्णवः । वालुकाकवलास्वाद—श्चर्वणीयो निरन्तरम् ॥ २२ ॥
अत्युग्रखड्गधारायां, गन्तव्यं चाप्रमादतः । पातव्या लीलया वत्स, वैश्वानरशिखावली ॥ २३ ॥
प्रतिस्रोतःपथेनेह, तरीतव्याऽमरापगा । तुलया तोलनीयश्च, सुमनोधरणीधरः ॥ २४ ॥
एकाकिना विजेतव्य—मजय्यारिबलं हठात् । राधावेधो विधातव्यो, यत्नेनानन्यचेतसा ॥ २५ ॥
जगज्जयपताकेह, पुत्र ग्राह्यातिदुर्ग्रहा । इत्येवमादिदृष्टान्तै—र्यतीनां दुष्करं व्रतम् ॥ २६ ॥

१ मक्षिकाश्रेणि. २ नरकदुःखकारणेषु ३ दुर्वर्णं रूप्यम् ४ पेया ५ अग्निज्वालाश्रेणिः ६ गङ्गा ७ देवगिरिः मेरु ८ एकाग्रचित्तेन

यतः—महाव्रतानि तुङ्गानि, वोढव्यानि निरन्तरम् । पञ्च मेरूपमान्यत्र, नृक्षेत्रेणेव साधुना ॥ २६ ॥
रजनीभोजनत्याग—व्रतं षष्ठमपि स्फुटम् । मानुषोत्तरवत्सेन, धार्यं तेषां वृ(व्र)तैः समम् ॥ २७ ॥
तथा संयमदेहस्य, मातृवद्वत्स वत्सलाः । पालनीयाः सदैवास्मिन्, याद्दं समितिगुप्तयः ॥ २८ ॥
निर्ममत्वं स्वदेहेऽपि, कर्त्तव्यमिह संततं । सर्वदा स्वपनं भूमौ, यावज्जीवममज्जनम् ॥ २९ ॥
द्विचत्वारिंशता भिक्षा—दोषैः शश्वददूषितः । प्राणयात्रनिमित्तं च, ग्राह्यः पिण्डोऽपि साधुभिः ॥
कदाचित्प्राप्यते सोपि, कदाचित्परमन्दिरे । न प्राप्यते ततश्चेतो—म्लानिः कार्या कदापि न ॥३१॥
केशोद्धरणमाधेयं, मासाद्याः प्रतिमास्तथा । षष्ठाष्टमादिकं कार्यं, तपश्चात्रातिदुष्करम् ॥ ३२ ॥
इति दुष्करता वत्स, व्रतस्य प्रतिपादिता । जिनाधीशैरतो धर्म्मं, गृहस्थोचितमाचर ॥ ३३ ॥
पुत्रः—कातराणामिदं मातर्दुष्करं सर्वमेव हि । निःस्पृहाणां निजाङ्गेऽपि, धैर्योद्यमवतां न तु ॥ ३४ ॥
तथा—समुत्तुङ्गतया ताव—द्दूरारोहः सुराचलः । गुरुतागाधताभ्यां च, दुर्लङ्घ्यस्तावदम्बुधिः ॥ ३५ ॥
तावन्मातुमिदं व्योम, विस्तीर्णत्वान्न शक्यते । पार्यते तावदेवाप्तुं, पर्यन्तो नावनेरपि ॥ ३६ ॥
दुर्भेदस्तावदेवात्र, कर्मग्रन्थिरपि स्फुटं । यावन्नारभ्यते धीरै—र्नरैरक्षोभ्यमानसैः ॥ ३७ ॥
तस्माद् व्रतविधौ मात—र्दुष्करत्वं न मे हृदि । धैर्यावलम्बनेनोच्चैः, किमपि प्रतिभासते ॥ ३८ ॥
तन्मातरनुजानीहि, मामितो व्रतहेतवे । भवावासाद्विभेम्यस्मिं, पावकादिव केसरी ॥ ३९ ॥

१ । अदम्

माता–यद्यप्येवमिदं वत्स, तथापि परिकर्म्मणां । विधेहि स्वशरीरस्य, भोगाङ्गपरिहारतः ॥ ४० ॥
सुकुमारशरीरोऽभू–त्प्रकृत्यैव यतो भवान् । प्रकृष्टदैवभोगाङ्ग–र्लालितश्च विशेषतः ॥ ४१ ॥
अतो देवाहृतान् गन्ध–माल्यभोज्यादिकांस्त्यज । मनुजानां सहस्वैतां–स्तथा सम्बोधय प्रियाः ॥४२॥
पुरान्तर्वर्तिचैत्यानि, पूजय प्रतिवासरं । सत्साधुवन्दनाहेतो–र्व्रज त्वं तदुपाश्रयम् ॥ ४३ ॥
सामायिकाद्यनुष्ठानं यथावसरमाचर । एवमभ्यासतो वत्स, प्रव्रज्या सुकरा तव ॥ ४४ ॥
विनयी शालिभद्रोऽपि, प्रतिशुश्राव तद्वचः । न कदापि वचो मातु–र्लङ्घयन्ति हि सत्सुताः ॥ ४५ ॥
अथासौ कर्तुमारेभे, वपुषः परिकर्मणां । तत्याज त्रिदशाहार–गन्धमाल्यादि सर्वथा ॥ ४६ ॥
मनुष्याहारभोगादि–परिकर्मणि चिन्तिते । प्रणम्य पितरं भक्त्या, विससर्ज प्रमोदभाक् ॥ ४७ ॥
मर्त्यसम्बन्धिभोगाङ्ग–परिमाणमसौ व्यधात् । द्वात्रिंशतश्च तूलीना–मेकैकां मुमुचेऽन्वहम् ॥ ४८ ॥
शालिभद्रोऽन्यदा सिंहा-सना सीनो निजाः प्रियाः । आहूय प्रावदत्सर्वाः, सुधामधुरया गिरा ॥ ४९ ॥
भो भोः पद्मावतीमुख्याः, श्रूयतां कुलबालिकाः । क्षणं चावहितीभूय[1], मदीयं वचनं स्फुटम् ॥ ५० ॥
विनयेनाञ्जलिं बध्वा, ततस्ता इदमूचिरे । अस्मानाज्ञापयत्वार्यपुत्रः प्रीतिकरः सताम् ॥ ५१ ॥
ततः श्रीशालिभद्रोऽपि, प्रोचे प्राज्ञशिरोमणिः । संसारे प्राणिनः प्रायः सर्वेऽपि विषयैषिणः ॥ ५२ ॥

१ सावधानाः भूत्वा

विषयाश्च भवन्त्यत्र, धनेन हृदयेशिताः । धनं च प्राप्यते प्रायः, पापारम्भपरिग्रहैः ॥ ५३ ॥
कर्मबन्धः पुनस्तेभ्यो, भवेत्संसारकारणम् । तत्र चानन्तदुःखानि, नरकादिषु देहिनाम् ॥ ५४ ॥
भार्यास्ततो रदज्योत्स्ना—धवलीकृतदिङ्मुखाः । भर्तुर्वचोऽमृतातृप्ता, विहस्येषद्बभाषिरे ॥५५॥
आर्यपुत्र विनारम्भं, भोगाः सन्त्यद्भुतास्तव । यत्पिता पूरयत्येतान् पुण्याद्देवत्वमाश्रितः ॥ ५६ ॥
ततो नाथ कथं कर्म—बन्धस्ते सम्भविष्यति । तदभावे च दुःखानि, भविष्यन्ति कथं ननु ॥ ५७ ॥
शालिभद्रोऽप्यूवाचैव—माभियोगिककर्मणः । बन्धः स्याद्देवतानीतं, भुञ्जानस्य ममानिशम् ॥ ५८ ॥
विषयाः स्वत एवैते, मानसोन्मादहेतवः । पातयन्ति ध्रुवं जन्तून्, भीषणे नरकावटे ॥ ५९ ॥
अत एव—विहाय विषयानष्टौ, चक्रिणः सीरिणो व्रतम् । गृहीत्वा लेभिरे मोक्षं, द्वौ चैकश्च सुरालयम्
सुन्दर्यस्तदलं भोगैः, परप्रेष्यत्वहेतुभिः । आदास्येऽहं परिव्रज्यां, येनान्यः स्यान्न मे प्रभुः ॥ ६१ ॥
युष्मासु याश्च सम्पूर्णा, बालवत्साश्च या पुनः । देशतस्ता गृहे धर्म—मम्बापार्श्वे प्रकुर्वताम् ॥ ६२ ॥
तिष्ठत्येव गृहे प्राज्यं, धनमासप्तसन्ततेः । दानभोगक्षमं तेन कुर्वीध्वं हितमात्मनः ॥ ६३ ॥
अन्याः पुनर्मया सार्द्धं—मङ्गीकुर्वन्तु सद्व्रतम् । धर्मो ह्ययं कुलस्त्रीणां, यत्प्रेयाननुगम्यते ॥ ६४ ॥
इत्यञ्जसा यथौचित्यं, सम्बोध्य सकलाः प्रियाः । एकैकाममुचद्भार्यां, शालिभद्रो दिने दिने ॥ ६५ ॥
अथ राजगृहक्रीडा—शैलवैभारभूषणे । श्रीमद्गुणशिलोद्याने, श्रीवीरः समवासरत् ॥ ६६ ॥

१ दासत्वकारणं: २ सगर्भाः

माणिक्यस्वर्णदुर्वर्णवप्रत्रयविराजितम् । देवैराधायि समव-सरणं तत्र तादृशम् ॥ ६७ ॥
प्राचीनद्वारमार्गेण, प्रविश्येह प्रदक्षिणाम् । दत्त्वा चोपाविशत्सिंहा-सनं श्रीवीरतीर्थकृत् ॥ ६८ ॥
अत्रान्तरे समागत्यो—द्यानपालेन भूपतिः । विज्ञप्तस्तीर्थनाथस्या—गमनेन प्रमोदिना ॥ ६९ ॥
वितीर्योद्यानपालाय, भूपतिः पारितोषिकं । चचाल सपरिवार-स्तीर्थनाथमुपासितुम् ॥ ७० ॥
अन्येऽपि सचिवश्रेष्ठि—प्रमुखाः पुरवासिनः । जिनेन्द्रं वन्दितुं चेलु-र्यथा राजा तथा प्रजाः ७१
इतश्चेभ्याङ्गजो धन्यः, शालिभद्रस्वसुः पतिः । ज्येष्ठाया सुन्दरीनाम्न्या, जामाता भूपतेरपि ॥७२॥
जगाद सुन्दरीं स्नानसामग्रीं कुरु मे प्रिये । गच्छामो वन्दितुं येन श्रीवीरजिननायकम् ॥ ७३ ॥ युग्मम् ॥
सम्पाद्य स्नानसामग्रीं, समग्रामपि सुन्दरी । अभ्यङ्गं कर्तुमारेभे, धन्यस्य स्वयमेव सा ॥ ७४ ॥
लक्षपाकादिना तैले-नाभ्यङ्गं मृदुपाणिका । सा यावत्पृष्ठिदेशेऽस्य, विधत्ते स्मातियत्नतः ॥ ७५ ॥
तावन्निपेतुरक्षिभ्यां, कवोष्णा बिन्दवोऽम्बुनः । ततो निरूपयामासो-परिष्टादिभ्यनन्दनः ॥ ७६ ॥
हा प्रिये किमिदं कोऽपि, किमाज्ञां कुरुते न ते । किम्वा त्वां विप्रियं कोऽपि, ब्रूते परिजनादि हि(षु)
मात्रा स्वस्रा च जामेय्या, यद्युक्ता परुषं प्रिये । तत्क्षन्तव्यं त्वयैवेह, लोकस्यैषा स्थितिर्यतः ७८
इत्युक्ते तेन साऽवोच-न्नाथ मे कुरुते वचः । परीवारजनः सर्वो, न मां कोऽप्यपभाषते ॥ ७९ ॥

१ दुर्वर्णरूप्यम् २ ददर्श २ भगिनी पुत्र्या

किन्त्वेक एव हि भ्राता, शालिभद्राऽभिधोऽस्ति मे । एकैकतूलिकात्यागं, करोति व्रतवाञ्छया ॥८०॥
आगते तु महावीरे, सम्प्रत्यादास्यते व्रतम् । इति हेतोरभूदश्रु—पातो मे जीवितेश्वर ॥ ८१ ॥
तथा नाथ कियन्तोऽन्ये, सन्तीह भ्रातरो मम । येषामनुभविष्यामि, शोभोत्कर्षं क्षणादिषु ॥ ८२ ॥
ततश्चेभ्याङ्गजः प्राह, यद्येवं तर्हि मा प्रिये । कुरुष्व त्वं मनःखेदं, भ्राता कापुरुषस्तव ॥ ८३ ॥
एकैकतूलिकां मुञ्चन् कथमादास्यते व्रतम् । सत्पुरुषाः शुभे कार्ये, न क्षिपन्त्यपि हि क्षणम् ॥ ८४ ॥
इति स्वभर्तुर्वचनं, सा निशम्य सनर्मकं । अभाषातेर्ष्यया नाथ, सत्पुरुषस्त्वमेव हि ॥ ८५ ॥
यस्त्वमेकपदेनैव, परित्यज्याखिलां श्रियम् । सनत्कुमारचक्रीव, व्रतमङ्गीकरिष्यसि ॥ ८६ ॥
अन्ये अपि सधर्मिण्या—वूचतुर्नर्मपूर्वकम् । भद्रं भद्राङ्गजा ब्रूते, स्वामिन् भद्राभिलाषिणी ॥ ८७ ॥
सुतनु स्नापय क्षिप्रं, येन श्रीवीरसन्निधौ । पश्यथ प्रव्रजन्तं मां, त्यक्ताशेषपरिग्रहम् ॥ ८८ ॥
इयत्कालं भवत्यो मे, व्रताग्रहणहेतवः । भवतीष्वनुकूलासु, सुग्रहं व्रतमद्य मे ॥ ८९ ॥
इति पत्युर्वचः श्रुत्वा, ताः प्रोचुर्गतसम्मदाः । स्वामिंस्त्वयि परिहास, एषोऽस्माभिर्व्यधीयत ॥ ९० ॥
परिहासगिरां स्वामिन्, कियदन्तं गमिष्यसि । न दुष्टः परिहासो हि, स्वभर्त्रा सह योषिताम् ॥९१॥
तन्नाथास्मान् श्रियश्चैवं, मा त्याक्षीर्नित्यलालिताः । भवतोऽप्याश्रितत्यागे, भविष्यत्ययशो महत् ॥

१ उत्सवादिषु २ सोपहासम् ३ गतहर्षाः

ततस्ताः प्रत्युवाचैवं, श्रीमानिभ्याङ्गजः सुधीः । सुन्दर्यः श्रूयतां वाक्यं, सुस्थीभूय क्षणं मम ॥९३॥
युष्मन्नर्मवचोऽप्येत—त्तत्त्वमित्यहमात्तवान् । औषधं हि तदेवेह, येन व्याधिः प्रशाम्यति ॥९४॥
तथा स्त्रियः श्रियश्चापि, विद्युतोऽपि हि चञ्चलाः । यद्यात्मना न मुच्यन्ते मुच्यते च तदा स्वयम्
तदेतासां परित्यागा—द्दीक्षां निर्वाणकारिणीम् । आददानस्य कीदृग्मे—ऽयशो हन्त भविष्यति॥
कल्मषस्यैकमित्राणि, श्रेयश्चैकवैरिणः, दुर्गतेश्चैकवर्त्तन्यः, । कामभोगा इमे ध्रुवम् ॥ ९६ ॥
विहाय तदमून् पापां—श्छित्वा मोहमहातरुम् । क्लेशजालमहाव्याधि–परमौषधसन्निभान् ॥९७॥
श्रयध्वमधुना सार्द्धं, मया यूयं महाव्रतान् । कुलधर्मः कुलस्त्रीणां, पतिवृत्तानुवर्त्तनम् ॥९८॥युग्मं॥
पीत्वा पतिमुखाम्भोजा—द्वचो मधुरसं शुभं । तुतुषुर्मंजुलालायाः, प्रियाभृङ्गाङ्गना इव ॥ ९९ ॥
मूर्द्धन्यञ्जलिसंश्लेषं, कृत्वोचुर्विनयेन ताः । आज्ञां स्वामिन्विधास्यामो, भवदीयामसंशयम् ॥१००॥
सम्बोध्येति प्रियाः स्नात्वा, कृतकौतुकमङ्गलः । रथं सज्जं विधत्तेत्या–दिदेशासौ नियुक्तकान् ॥ १ ॥
तदैव शालिभद्राय, सन्दिदेश निजैर्नरैः । वैभारभूधरे धन्य–श्चैत्ये गुणशिलाभिधे ॥ २ ॥
श्रीवीरचरणाम्भोजं, वन्दितु प्रचलत्यसौ । अधिरुह्य रथं शीघ्रं, त्वमागच्छ सम्प्रति ॥३॥युग्मम्॥
ततो धन्यः समारूढो, रथं श्वेततुरङ्गमम् । सौम्यमूर्त्तिश्चचालाथ, साक्षादिव कलानिधिः ॥ ४ ॥
शालिभद्रः स्फुरत्तेजा, नीलाश्वैरुपशोभितम् । चारुस्यन्दनमारुह्य, चचलार्कश्रियं दधत् ॥ ५ ॥

पापस्य २ वर्त्तनी मार्गः

नृपतिर्मन्त्रिसामन्त—श्रेष्ठिप्रमुखनागरैः । युक्तो नानाविधप्राज्य—यानारूढश्चलन् पथि ॥ ६ ॥
छत्रत्रितयमालोक्य, पुरो जिनवरोपरि । त्रैलोक्योपरिवर्त्तित्वं, प्रख्यापयदिव प्रभोः ॥ ७ ॥
मुमुदे सपरीवारो, यानेभ्योऽवततार च । क्रमेण प्राप समव—सृतिद्वारं नरेश्वरः ॥८॥ त्रिभिर्विशेषकम्
कृपाणं तत्र तत्याज, पादुके छत्रमुन्नतम् । नृपश्चामरयोर्द्वन्द्वं, किरीटं चोत्तमाङ्गतः ॥ ९ ॥
प्रविशन्नुत्तरद्वारा, समालोके जगत्प्रभोः । स्वमूर्द्धन्यञ्जलिं बध्ध्वा, ननाम नरपुङ्गवः ॥ १० ॥
ततः प्रदक्षिणां दत्त्वा, प्रणम्य जगदीश्वरं । निषसाद नृपः पूर्वो—त्तरस्यां दिशि भूतले ॥ ११ ॥
अन्येऽपीन्द्रादयः सर्वे, यथास्थानमुपाविशन् । ज्योत्स्ना प्रिया इवास्येन्दुं, वीक्षमाणा जिनेशितुः १२
अथ योजनगामिन्या, वाण्या सर्वाङ्गितुल्यया । पीयूषमिव वर्षन्त्या, प्रारेभे देशनां प्रभुः ॥ १३ ॥
एकेन्द्रियादिजीवेषु, भ्रमतामिह देहिनाम् । अनन्तं कालमश्रान्तं, नरत्वमतिदुर्लभम् ॥ १४ ॥
मनुजत्वेऽपि सम्प्राप्ते, क्षेत्रमार्यं सुदुर्लभम् । जन्मना यदलङ्कार्य—मार्यवर्यैर्जिनादिभिः ॥ १५ ॥
आर्यक्षेत्रसमुत्पन्ना—वपि जातिर्दुरासदा । महाप्रभावरत्नानां क्षिप्तौ खानिरिवोत्तमा ॥ १६ ॥
जातावपि कुलं श्रेयः श्रेयोयोग्यं सुदुर्लभम् । जगद्धितेन येनारयाः सौरभं यात्यवन्धनाम् ॥ १७ ॥
कुलेऽप्यक्षतपञ्चाक्ष—भावः पुण्यैरवाप्यते । यत्राकृतिर्गुणास्तत्र—त्युक्तः सद्गुणमन्दिरम् ॥ १८ ॥

१ चकोराः २ उत्तमम् ३ धर्मयोग्यम् ४ जातेः

पञ्चाक्षत्वेऽपि चारोग्यं, दुरापं जनताप्रियम् । तद्विना सर्वसामग्री, चतुर्वर्गेऽपि निःफलाः ॥ १९ ॥
आरोग्येऽपि प्रियं सर्वप्राणिनामायुरेव हि । जीवितव्यकृते जन्तु-र्यद्राज्यमपि मुञ्चति ॥ २० ॥
दीर्घेऽप्यायुषि सद्धर्म-बुद्धिः शुद्धा गवेष्यते । तया विना यदज्ञान-कष्टं सर्वा अपि क्रियाः॥२१॥
धर्मबुद्धावपि श्लाघ्या, सद्गुरोर्वचनश्रुतिः सा तां विना निर्लवण—रसवत्यादिसोदरा ॥ २२ ॥
आप्तवाक्यमपि श्रुत्वा-ऽवग्रहस्तत्त्वगोचरः । श्रेयान् यतो विपर्यासो, जायते विपदे नृणाम् ॥ २३ ॥
अवग्रहेऽपि या श्रद्धा, तत्त्वनिश्चयगोचरा । संसारदुःखविच्छेदे, निदानं सैव देहिनाम् ॥ २४ ॥
ज्ञात्वा श्रद्धाय तत्त्वानि, संयमः समनुष्ठितः । अक्षेपमोक्षदः पुंसां, सामग्र्येषा शुभश्रियाम् ॥२५॥
यथोत्तरं सुदुःप्रापा, दृष्टान्तै—श्चोल्लकादिभिः । प्राप्ता भवद्भिरप्येषा, सफलीक्रियतां ततः ॥ २६ ॥
श्रुत्वा श्रीमन्महावीर—स्वामिनो देशनागिरः । तुतुषुः पीतपीयूषा, इव सर्वे सभासदः ॥ २७ ॥
अथाभ्युत्थाय सर्वेऽपि, प्रणम्य जगतां गुरुम् । कृतकृत्या इवाविक्ष-न्नगरं श्रेणिकादयः ॥ २८ ॥
नत्वोचतुर्जिनाधिशा—मिभ्यगोभद्रनन्दनौ । धर्मोऽयमरुचन्नाथो—पदिष्टोऽतिशयेन नौ ॥ २९ ॥
तद्यावद्वेश्मनः स्वास्थ्यं, कुर्वश्चैत्यादिसत्क्रियाम् । तावदङ्गीकरिष्यावः, संयमं युष्मदन्तिके ॥ ३० ॥
भगवांस्तावुवाचैवं, युक्तं भव्याङ्गिनामदः । भो भद्रौ न विधातव्यः, प्रतिबन्धो गृहादिषु ॥ ३१ ॥

१ चतुर्वर्गा इति प्रत्यन्तरे

ततस्तौ स्वगृहे गत्वा, रथयात्रापुरस्सरम् । व्यधत्तां जिनचैत्येषु, पूजामष्टाह्निकादिकाम् ॥ ३२ ॥
निर्युञ्जाते स्म चैत्यानां, निश्रासु प्रचुरं धनम् । सुश्रावकान् समाहूय, तेषां प्रत्यक्षमेव हि॥३३॥
ददतुः श्रावकेभ्योऽपि वाञ्छिताभ्यधिकं धनम् । सुस्थचित्ता यथा तेऽपि, चैत्यचिन्तां प्रकुर्वते॥
साधारणं दशक्षेत्र्या-स्तेषामायत्तमेव हि । चक्रतुर्वसुभूयिष्ठं, शासनोन्नतिहेतवे ॥ ३५ ॥
गत्वोद्यानवनं नत्वा, स्वयमेवातिभक्तितः । स्वामिनो गृहचैत्यानि, वन्दध्वमिति सादरम्॥ ३६ ॥
आहूय सपरिवारान्, समस्तान्गणधारिणः । समग्रार्यायुतां चार्य-चन्दनां निजसद्मनि ॥ ३७ ॥
चतुर्विधेन भक्तेन, प्रासुकेनोत्तमेन तौ । प्रतिलम्भयतः स्मोच्चै-र्वस्त्रैः पात्रैश्च कम्बलैः ॥ ३८ ॥
पूजयामासतुः प्राज्यै-स्ताम्बूलवसनादिभिः ॥३९॥
तदा तत्र समाहूय, श्रावकान् श्राविका अपि । पूजयामासतुः प्राज्यै-स्ताम्बूलवसनादिभिः ॥३९॥
पटहाघोषणापूर्वं, दीनादिभ्योऽपि सर्वतः । उचितं वस्त्रभोज्यादि, दापितं चानुकम्पया ॥ ४० ॥
अमारिघोषणापूर्वं, प्रकृतिभ्योऽपि भोजनम् । अष्टाह्निकादिनेषूच्चै—र्जीवघातनिवृत्तये ॥ ४१ ॥
अन्यतीर्थिकलिङ्गिभ्योऽप्यन्नाच्छादनमात्रकम् । माध्यस्थ्यसूचकं दत्तं, शासनोन्नतिहेतवे ॥ ४२ ॥
यतस्तेभ्योऽधिकं दत्तं, मिथ्यात्वस्याभिवृद्धये । क्षीरदानमिवाहिभ्यो, लोकापकृतये भवेत्॥ ४३ ॥
राजानं सपरीवारं, बहुमानपुरस्सरम् । स्वबन्धून् पुरलोकांश्च, समाहूय शुभे दिने ॥ ४४ ॥
सहस्रनरवोढव्ये, पताकावलिसङ्कुले । मनोज्ञरूपकाकीर्णे, विस्तीर्णे वरवेदिके ॥ ४५ ॥

चारुचामीकरस्तम्भ–विनिवेशिततोरणे । कारयामासतुः स्वैः स्वैः, शिबिके तौ नियुक्तकैः ॥४६॥त्रिभिर्विशेषकम्॥
रत्नसिंहासने रम्ये, तयोर्मध्ये निवेशिते । तयोश्चोभयतः स्वर्ण—भद्रासनपरम्पराः ॥ ४७ ॥
शालिभद्रः स्फुरद्भद्रः, कृतस्नानविलेपनः । जङ्गमः कल्पशाखीव, दिव्यालङ्कारवस्त्रभृत् ॥ ४८ ॥
शिबिकामारुरोह स्वा—मलञ्चक्रे वरासनं । तस्य दक्षिणतो भद्रा, भद्रासनमुपाविशत् ॥ ४९ ॥
व्रतं जिघृक्षवो भार्या, वस्त्रालङ्कारभूषिताः । विकसत्पुण्डरीकाक्ष्यश्चात्युज्ज्वलमुखश्रियः ॥ ५० ॥
अम्बधात्री पुनर्वाम–पार्श्वे भद्रासने स्थिता । रजोहरण पात्रादि—पटलान्यथ बिभ्रती ॥ ५१ ॥
पृष्ठतश्चारुवेषाऽन्या—ऽवतस्थे छत्रधारिणी । श्वेतचामरधारिण्यौ, तस्थतुः पार्श्वयोर्द्वयोः ॥ ५२ ॥
विहितस्फारशृङ्गाराभृंङ्गारं बिभ्रतीतरा । जात्यस्वर्णमयं पूर्णं, वारिणा पुरतः स्थिता ॥ ५३ ॥
वीणावेणुमृदङ्गादि—वादकैः कलगायनैः । नर्त्तकीभिरपि प्रेक्षा, प्रारेभे नाट्यचुञ्चुभिः ॥ ५४ ॥
धन्योऽप्यध्यारुरोहैव–मेवाथ शिबिकां निजाम् । सिंहासनमलङ्कृत्य, पूर्वाशाभिमुखोऽभवत् ॥
दक्षिणे तस्य सोमश्रीः, सुन्दरी कुसुमावली । तस्थुस्तिस्रः कुटुंबिन्यः, प्रव्रज्याग्रहणोद्यताः ॥५६॥
तस्थौ पटलमादाय, वामे कुलमहत्तरा । पार्श्वे चामरधारिण्यौ, पृष्ठतः छत्रधारिणी ॥ ५७ ॥
पुरः सीमन्तिनी चैका, दधती कनकालुकाम् । शुशुभे दिक्कुमारीव, जिनजन्ममहोत्सवे ॥५८॥

१ कलशम् २ सुवर्णकलशम्

सुरसंगीतकं देव—गन्धर्वा इव बन्धुरम् ॥ ५९ ॥
पुरश्चोभयतश्चक्रुः, प्रेक्षणं गायनादयः । स्वस्ति स्वस्तीति जल्पत्सु, तारतारं द्विजन्मसु ॥
पठत्सु बन्दिवृन्देषु, नव्यकाव्यानि यत्नतः । किंनरेष्विव लोकानां, जनयत्सु मनोमुदम् ॥ ६१ ॥
गायनेष्वपि गायत्सु, पुरतो मधुरस्वरम् । कांस्यतालातुलकलतलमोत्तालतालादिनादैः ।
भेरीभाङ्कारनादैर्धुमधुमधुमितैर्मर्दलस्यातितारै—र्म्लांम्लांम्लां
प्रस्फूर्जन्तौर्यिकेषु प्रतिरवफलनाद्रोदसीं पूरयत्सु ॥ ६२ ॥
निःसंख्यैः शङ्खशब्दैः पटुपटहरवैः काहलोच्चैः स्वरैश्च, सद्यः सहस्रं नराः ।
धन्यस्यैभ्यसुतस्य निर्मलमतेः श्रीशालिभद्रस्य च, प्रत्येकं शिबिके विमानसदृशौ कल्पाः समुत्क्षिपुः ६३चतुर्भिःकुलं
दिव्यालङ्कृतिधारिणः समवयोऽवस्थोन्नतत्वान्विता-स्तुष्टास्तुल्यमनोरमांशुकवराः तोरणादिभिः ॥
ततो निजनिजाद् गेहा—च्चेलतुव्रतसत्वरौ । मिलितौ राजमार्गे चा—लङ्कृते क्षमः सम्यग्दृशां द्वयम् ॥
तदा चावधिना ज्ञात्वा, पुत्रनिष्क्रमणोत्सवम् । आगात्तातसुरः प्रीतः, सर्वतोऽकरोत् ॥६६॥
भुवं गन्धोदकेनासौ, सिषेच व्योमसंस्थितः । वृष्टिं दशार्द्धवर्णानां पुष्पाणां त्रिदशोत्तमः ॥ ६७ ॥
चेलोत्क्षेपं गन्धवृष्टिं, दीनाराणां प्रवर्षणम् । लोकदारिद्र्यविच्छेदि, चकार व्रतोत्साहोऽनयोरिति ॥
तत्किङ्कराः पुनर्व्योम्नि, ताडयन्ति स्म दुन्दुभीन् । जुघुषुः साध्वहो साधु, ॥ ६९ ॥
ततोऽनुगम्यमानौ तौ श्रेणिकेन महीभुजा । सहामात्यपुरश्रेष्ठै—श्चतुरङ्गबलेन च

१ समर्थाः

कृतार्थौ पुण्यवन्तौ च, सुलब्धजनुषाविमौ[1] । विहायैवंविधां लक्ष्मीं, गृहीतो यौ व्रतश्रियम् ॥७०॥
अर्हच्छासनमेवैकं, क्षितौ जयति निर्मलम् । एवंविधा महात्मानो, रमन्ते यत्र तत्त्वतः ॥ ७१ ॥
इति लोकगिरः पुण्याः, शृण्वन्तौ श्रोत्रहर्षदाः । पदे पदे प्रतीच्छन्तौ, साथी[र्ध्या]न् लोकाक्षताञ्जलीन् ॥ ७२ ॥
जनयन्तौ महोत्साहं, भव्यानां धर्मकर्मणि । प्रापतुः श्रेष्ठिपुत्रौ तौ, चैत्यं गुणशिलाभिधम् ॥
छत्रातिच्छत्रमालोक्य, पुरतस्त्रिजगत्पतेः मुमुदाते भृशमुभौ, चकोराविव शीतगुम् ॥ ७४ ॥
भक्त्याथ शिबिकाभ्यां तौ, सभार्याववतेरतुः । विमानाभ्यां सदेवीका-वाद्यस्वर्गाधिपाविव ॥७५॥
प्रविश्याथोत्तरद्वारा, दत्त्वा तिस्रः प्रदक्षिणाः । श्रीवीरस्वामिनं श्रेष्ठि-सुतौ भक्त्या प्रणेमतुः ॥७६॥
अथ भद्रा पुरस्कृत्य शालिभद्रं सधन्यकम् । तद्भार्याश्चातिसंविग्ना, वीरनाथं व्यजिज्ञपत् ॥ ७७ ॥
भगवन्नेष पुत्रो मे, जामाता चैष पुण्यवान् । युष्मत्पादान्तिके दीक्षां, सकलत्रो जिघृक्षतः ॥ ७४ ॥
तद्भगवन् भवाम्भोधौ, कर्णधारोपमो भवान् । दीक्षापोतप्रदानेन सभार्यौ तारयत्विमौ ॥ ७९ ॥
भगवानप्युवाचैवं, धीरगम्भीरया गिरा । युक्तमेतादृशामेत-द्भद्रे भद्राभिलाषिणाम् ॥ ८० ॥
ततश्चोत्तरपूर्वस्यां, दिशि सर्वे ससम्भ्रमम् । त्यक्त्वा शेषानलङ्कारान् केशोद्धरणमादधुः ॥ ८१ ॥
स्थूलमुक्ताफलाकारान् बाष्पबिन्दून्विमुञ्चती । सहंसलक्ष्मणा केशान्, प्रतीच्छन्तीव वाससा॥८२॥

---

१ सुलब्धजन्मानौ

भद्रा सर्वानुवाचैवं, श्रेष्ठिनी गद्गदाक्षरम् । तेषामुत्साहमाधातुं, हर्षशोकसमाकुला ॥ ८३ ॥
यतितव्यमसुत्रार्थे, घटितव्यं विशेषतः । प्रमादो न विधातव्यो, भवद्भिर्मोक्षकाङ्क्षिभिः ॥८४॥ त्रिभिर्विशेषकम्॥
साधुवेषमथादाय, भुवनाधिपतेः पुरः । गोभद्रेभ्याङ्गजौ शालिभद्रधन्याभिधानकौ ॥ ८५ ॥
उपस्थितौ सपत्नीकौ, शुशुभाते महौजसौ । मूर्तिमत्कीर्तिभिर्युक्तौ, यशोधर्माविवाऽमलौ ॥
सत्सामायिकसूत्रस्यो—च्चारणापूर्वकं विभुः । सर्वेभ्योऽपि ददौ दीक्षां, कारुण्यामृतसागरः ॥
उपबृंहां ततस्तेषा—मेवं चक्रे जिनेश्वरः । भो भो धन्याः सुपुण्याश्च, यूयमेव क्षिताविह ॥
यतोऽयं दुस्तरस्ताव—त्संसारापारनीरधीः । भूयो भूयः समुत्पत्ति—स्तावद् भूयिष्ठयोनिषु ॥ ८९ ॥
तावद् दुःखान्यनेकानि, दारुणानि महीतले । यावन्न शुद्धचारित्र—लाभः सम्पद्यते नृणाम् ॥९०॥
सोमश्रीसुन्दरीपद्मा–वत्याद्या नवदीक्षिताः । आर्यिका भगवानार्य—चन्दनायै समार्पयन ॥ ९१ ॥
प्रणम्य स्वामीनं भद्रा, श्रेणिको नागरा अपि । प्रमोदकौतुकापूर्णा, ययुः स्वं स्वं निकेतनम्॥
प्रत्यहं राजहंसौघैः, सेव्यमानपदाम्बुजः । दिनानि कतिचित्तत्र, जिनोऽस्थान्मानमोपमः ॥९३॥
परोपकृतयेऽन्यत्र, स्वामि साधुगणान्वितः । विजहार महान्तो हि, परोपकृतिकर्मठाः ॥ ९४ ॥
धन्यश्च शालिभद्रश्च, सुधर्मस्वामिसन्निधौ । क्रमादेकादशाङ्गानि, पठतः स्म समाहितौ ॥९५॥
कनकावलिरत्नावलि–भद्र–महाभद्र–सर्वतो–भद्राः । प्रतिमा भिक्षुप्रतिमा, द्वादशसंख्या निराशंसम्

तथा संवत्सरं नाम, गुणरत्नपदादिकम् । सिंहनिक्रीडितं द्वेधा, तप्येते स्म महामुनी ॥ ९७ ॥
षष्ठाष्टमे च दशम–द्वादशके पक्षपक्षयुगले च । मासद्वयमासत्रय–मासचतुष्कादिकं च तपः ॥ ९८ ॥
विधाय तावनिर्विण्णौ, पारणं चक्रतुर्मुनी । निर्निदानमनोवृत्ती, निश्चलावचलाविव ॥ ९९ ॥ युग्मम्
अभूतां तपसाऽनेन, दुष्करेण महीयसा । कृशाङ्गलतिकावेतौ, जीर्णस्थाणूपमौ मुनी ॥ १०० ॥
भगवानथ सिद्धार्थ—पार्थिवान्वयभूषणः । सप्तहस्तप्रमाणाङ्ग—यष्टिरष्टापदद्युतिः ॥ १ ॥
आकाशचारिणा पूर्ण—चन्द्रबिम्बानुकारिणा । विस्तीर्णेनोन्नतेनोर्ध्वं—मातपत्रेण शोभितः ॥ २ ॥
चारुचामरयुग्मेन, कौमुदीन्दुकरद्युता । वीज्यमानो नभस्थेन, प्रभुः प्रचलता स्वयम् ॥ ३ ॥
रत्नसिंहासनेनोच्चैः, पादपीठोपशोभिना । तन्वानो विभुराश्चर्यं, लोकानां व्योमगामिनाम् ॥ ४ ॥
नेताऽर्हन्नेक एवेति, नूनमूर्ध्वीकृतेन खे । धर्मेणेन्द्रध्वजेनोच्चै—र्भुजेनैवोपशोभितः ॥ ५ ॥
पुरः प्रचलता धर्म—चक्रेण सेवितः प्रभुः । विजेतुं क्रूरकर्मारि—चक्रं चक्रीव दिग्जये ॥ ६ ॥
दिवि दुन्दुभिभिस्तारं, ध्वनद्भिरुपशोभितः । स्तूयमानगुणः स्वामी, मागधैरिव साधुभिः ॥ ७ ॥
नवभिः स्वर्णकमलैः, श्रीयमाणपदः प्रभुः । तल्लक्ष्माब्जश्रियः प्राप्तैः, स्वर्धुनीनलिनैरिव ॥ ८ ॥
अहंपूर्विकया देवैः, सेव्यमानश्च कोटिशः । सौरभादिगुणाकृष्टैः, पद्माकर इवालिभिः ॥ ९ ॥
सौम्याकृतिरसौ श्वेत–वासोभिर्मुनिभिर्वृतः । स्फाटिकैरिव नक्षत्र–विमानैश्चन्द्रमण्डलः ॥ १० ॥

१ सुवर्णकान्तिः

शमयन् भीति मारीती-विंहारभुवि सद्विभुः । मार्तण्डमण्डलः शश्व-दन्धकारततीरिव ॥ ११ ॥
जिनो निवर्तयन्वैरं, नित्यवैरवतामपि । तीव्रव्याधिमिव प्रौढ-वैद्यो रोगितनूमताम् ॥ १२ ॥
सर्वतो विरतिं देश-विरतिं जिनपुङ्गवः । ददन्नरेश्वरादिभ्यो, विजहार महीतलम् ॥ १३ ॥त्रयोदशभिःकुलकम् ॥
तथाहि—केवलज्ञानिना स्वेन, भ्रात्रा वल्कलचीरिणा । समुत्पादितसंवेगं, बालपुत्रार्पितश्रियम् ॥ १४ ॥
प्रसन्नचन्द्रनामानं, पृष्ठचम्पाधिपं विभुः । प्रव्रज्यां ग्राहयामास, सोमचन्द्रनृपाङ्गजम् ॥ १५ ॥ युग्मम् ॥
कौशाम्बीनामधेयायां, पुर्यां वत्साख्यनीवृति । मृगावतीं शतानीक-पत्नीं दीक्षाभिलाषिणीम् ॥ १६ ॥
सहाङ्गारवतीमुख्य—कलत्रैरष्टभिर्वरैः । चण्डप्रद्योतभूपस्य, दीक्षामग्राहयत्प्रभुः ॥ १७ ॥
श्रीपोलाशपुरोद्याने, श्रीवणे नन्दनोपमे । बालायाबालभावाय, तद्भवामृतगामिने ॥ १८ ॥
विजयोर्वीशपुत्राय. श्रीदेविकुक्षिजन्मने । षड्वर्षायातिमुक्ताय, ददौ दीक्षां जिनेश्वरः ॥ १९ ॥ युग्मम् ॥
आनन्दाख्यं गृहपतिं, वाणिज्यग्रामवासिनम् । भगवन् श्रावकीचक्रे-द्वादशव्रतधारिणम् ॥ २० ॥
अङ्गालङ्कारभूतायां, चम्पायां बोधितोऽर्हता । कुटुम्बी कामदेवाख्यो, बभूव श्रावको गुणी २१
काशीजनपदे वारा-णस्यां तु चुलनीपिता । सुरादेवश्च सम्बोध्य जिनेन श्रावकीकृतौ ॥ २२ ॥
पुर्यामालम्भिकायां च, कुटुम्ब्येष महर्द्धिकः । अर्हता चुल्लशतको बोधितः श्रावकोऽभवत्॥२३॥

१ मोक्षगामिने

पश्चालेषु च काम्पिल्ये, कुटुम्बी कुण्डकोलिकः । संबोधितो जिनेन्द्रेण, निश्चलः श्रावकोऽभवत्॥
स्वामिना वर्धमानेन, भावितात्मार्हदागमे । चक्रे सद्दालपुत्राख्यः पोलाशपुरसंस्थितः ॥ २५ ॥
नन्दिनीलंतिकातातौ श्रावस्त्यां श्रावकीकृतौ । कुणालाख्ये जनपदे, बोधयित्वार्हता स्वयम् ।
सर्वे पञ्चदशे वर्षे, ज्येष्ठपुत्रे गृहश्रीयम् । निवेश्य प्रतिमाः कृत्वा, मासं चानशनं व्यधुः ॥
विंशतिं श्रावकत्वं तु वर्षाणि प्रतिपाल्य च । चतुःपल्योपमायुष्क-देवेपूत्पत्तिमासदन् ॥ २८ ॥
एकावतारिणश्चैते, नव सौधर्मतश्च्युताः । प्राप्य जन्म विदेहेषु, यास्यन्ति पदमव्ययम् ॥ २९ ॥
सोवीराभिधदेशेषु, पुरे वीतभयाभिधे । प्रद्योतस्य विजेतारं, भूपमौद्रायणाभिधम् ॥ ३० ॥
बद्धकोटीरभूपेषु, पश्चिमं व्रतधारिणम् । दीक्षामग्राहयत्स्वामी, श्रीवीरश्चरमो जिनः ॥ ३१ ॥युग्मम्॥
सिद्धार्थनन्दनः श्रीमा-नुज्जयिन्यामवन्तिषु । चण्डप्रद्योतभूपालं, श्रावकत्वमलम्भयत् ॥ ३२ ॥
विहरन्नन्यदा साधुसाध्वीसंघसमावृतः । कौशाम्ब्या बहिरुद्याने, श्रीवीरः पुनरागमत् ॥ ३३ ॥
तत्र पश्चिमपौरुष्यां, सद्धर्मं दिशति प्रभौ । अनन्तकालादाश्चर्य-कारिणौ चन्द्रभास्करौ ॥ ३४ ॥
मृगावत्या दिनभ्रान्त्या, निश्चयवस्थानकारिणौ । सविमानौ समागत्य, वन्दित्वोपास्य च प्रभुम् ॥
तावत्कालसमाक्रान्ति-योग्ये गगनमण्डले । गत्वा भूयोऽवतस्थाते, तौ नियत्या नियन्त्रितौ ३६॥त्रिभिर्विशेषकम्॥
कदाचिद्विहरन्नर्ह-न्नगरे पोतनाभिधे । भूयः सुभूमिभागाख्यो-पवने समवासरत् ॥ ३७ ॥

## ॥ अथ षष्ठो सर्गः प्रारभ्यते. ॥

ब्रूतेऽथ भगवान्कोऽपि, पुरे काप्यभवन्नृपः । तस्यासीत्सेवकः कोऽपि, विनीतः क्षत्रियो गुणी ॥१॥
पत्नी धन्याऽभवत्तस्य, सुतः सङ्गमकाभिधः । सुखेनैवातिचक्राम, तेषां कालः कियानपि ॥२॥
अन्यदा दुर्निषेधोऽस्य, सेवकस्योदभून्महान् । कायक्लेशकरः कोऽपि, व्याधिः शत्रुरिवोत्कटः ॥३॥
ततः प्रारेभिरे तस्य, सर्वस्थाम्ना भिषग्वराः । चिकित्सां महतीं कर्त्तुं, द्विषतः सुभटा इव ॥४॥
तथापि न न्यवर्तिष्ट, मनागपि महामयः । किन्त्वेष पश्यतां तेषां, तेन मृत्युमनीयत ॥ ५ ॥
विललाप ततो धन्या, सशोका करुणस्वरा । जीवितव्यं यतः स्त्रीणां, भर्तृजीवितमेव हि ॥ ६ ॥
विदधे मृतकृत्यानि, दीनास्यात्यन्तदुःखिता । कियत्यपि गते काले, निःशोका साऽभवत्ततः ॥७॥
तत्राशक्नुवती स्थातुं, संस्थिते प्राणवल्लभे । शालिग्राममगाद्बालं, पुत्रं सादाय सङ्गमम् ॥ ८ ॥
गृहकर्माणि सा चक्रे, तत्र चेश्वरसद्मसु । तेषामेव च तत्पुत्रो, वत्सरूपाण्यचारयत् ॥ ९ ॥
अथान्यदा बहिर्भूमौ, तर्णकांश्चारयन्नसौ । प्रासुकस्थण्डिले जीव-संसक्तिपरिवर्जिते ॥ १० ॥
तप्यमानं तपस्तीव्रं, शान्तं सूर्यावलोकिनम् । मूर्त्तं धर्ममिवापश्य-त्प्रलम्बितभुजं मुनिम् ॥ ११ ॥
ततः सङ्गमको गोधुक्, मुमुदे मुनिदर्शनात् । भाविभद्रा हि तुष्यन्ति, साधुनिर्वर्णनाद् ध्रुवम् ॥१२॥

१ मृते. २ साधुदर्शनात्

तस्य वाचंयमस्यैव, प्रणनाम पदाम्बुजम् । मस्तकस्पृष्टभूपृष्ठो, भक्तिनिर्भरमानसः ॥ १३ ॥
पूर्वं सन्मुनिसम्पर्का-भावितोऽपि विवेकभाक् । विशिष्टज्ञानहीनोऽपि, साधूपासनतत्परः ॥ १४ ॥
कायोत्सर्गस्थितस्यैव, यतिनः पादमर्दनात् । असौ विश्रामणां चक्रे, प्रबुद्ध श्रावको यथा ॥ १५ ॥ युग्मम्
धन्योऽस्मि कृतपुण्योऽस्मि, कृतार्थोऽस्मीह निश्चितम् । योहं वाचंयमस्यास्य, निःपङ्कं पादपङ्कजम् ॥१६॥
पश्यामि प्रातरुत्थाय, भृङ्गवत्प्रतिवासरम् । इति चिन्तयतस्तस्य कियन्तोऽपि ययुर्दिनाः ॥१७॥
कायोत्सर्गेण तिष्ठन्तं, सर्वदा वीक्ष्य तं मुनिम् । प्रविशन्तमनालोक्य, भिक्षार्थं ग्राममध्यतः ॥१८॥
नित्यमासेवमानेना-ज्ञायि सङ्गमकेन तु । विधत्ते पारणां नैव, महात्माऽयमिति ध्रुवम् ॥१९॥ युग्मम्
मद्गेहे तदयं साधुः, पारणां कुरुते यदि । तदाऽलं पुण्यवानस्मी—त्यचिन्तयदहर्निशम् ॥ २० ॥
अथान्येद्युरभूत्कोऽपि, शालिग्रामे महोत्सवः । पायसं राध्यते तत्र, लोकैः सद्मनि सद्मनि ॥२१॥
सङ्गमस्तर्णकांस्त्यक्त्वा, बहिः साधुमुपास्य च । तदा ग्राममुपागच्छन्, भुज्यमानं गृहे गृहे ॥२२॥
पायसं प्राज्यखण्डाज्य-सन्मिश्रमवलोकयन् । मातृपार्श्वे निजे गेहे, भोजनार्थमुपागमत् ॥२३॥युग्मम्
ययाचे पायसं सोऽम्बां, परमान्नाभिलाषुकः । सा जगाद दरिद्राऽस्मि, परमान्नं कुतोऽस्ति मे ॥२४॥
तथाप्यज्ञतया तेन, याच्यमाना निरन्तरम् । पूर्वावस्थां स्मरन्ती सा, रुरोदोच्चैःस्वरं ततः ॥२५॥
तस्याः रुदितमाकर्ण्य, प्रातिवेश्मिकयोषितः । आसन् सशोकास्तत्कष्टानुविद्धहृदया इव ॥ २६ ॥

शीघ्रं तद्गेहमागत्य, पप्रच्छुर्दुःखकारणम् । धन्या ताभ्याऽभ्यधत्तैवं, सशोका दुःखकारणम् ॥२७॥
अस्ति नास्तीत्यसौ गेहे, नवेत्यज्ञतया सुतः । ययाचे पायसं बाढं, दुःखेनारोदि तन्मया ॥२८॥
यद्येवं तर्हि मारोदी-र्दास्यामोऽद्यैव ते वयम् । क्षीरतण्डुलखण्डाद्या-नीति तास्तां बभाषिरे ॥२९॥
स्वगृहेभ्यः समानीय, दुग्धादीनि प्रभूतशः । धन्यायै प्रतिवेश्मिन्यो, ददुः कल्पलता इव ॥३०॥
ततो धन्यां समस्तास्ता, एवं सदयमूचिरे । निष्पाद्य पायसं प्राज्यं, पूरयास्य मनोरथम् ॥३१॥
विधाय पायसं रम्यं, धन्योपावेशयत्सुतम् । खण्डाज्यप्राज्यमुत्कृष्टं, तत्स्थाले तन्निचिक्षिपे ॥३२॥
कृत्येन केनचिद्धन्या, प्रविवेश गृहान्तरम् । कृत्यानि च दरिद्राणा-मनिवृत्तानि सर्वदा ॥३३॥
मासक्षपणमाधाया-न्तरे स मुनिर्वनात् । अनाकुलात्मा भिक्षायै, शालिग्राममथाविशत् ॥३४॥
पर्यटन्नुच्चनीचेषु, कुलेष्वागा-त्स तद्गृहम् । नौरिवोत्तारणायास्य, भवागाधपयोनिधेः ॥३५॥
अकस्मादेव निर्वर्ण्य, मुनिं निजगृहाङ्गणे । व्यकल्पयदसौ चित्ते हर्षोत्कर्षवशादिति ॥ ३६ ॥
सचेताः किमयं चिन्ता-मणिश्चिन्तितवस्तुदः । अपशुः कामधुग्धेनुः, किमसौ गुणमन्दिरम् ॥३७॥
जङ्गमः किमयं कल्प-शाखी सङ्कल्पितावहः । दृश्यते यत्स एवैष, मुनिर्मासमुपोषितः ॥३८॥
भद्रं भद्रतरं भद्र-तमं यन्मे गृहाङ्गणम् । तमो नुदन् पुपावैष, स्वैपादैर्मुनिभास्करः ॥ ३९ ॥

१ दृष्ट्वा. २ सजीव. ३ सूर्यपक्षे स्वकिरणैः.

पुण्योदयादिहायातो, ममैवायं मुनिर्ध्रुवम् । किमपुण्यवतो गेहं, लक्ष्मीरेति स्वयम्वरा ॥४०॥
अत्युत्तममिदं पात्रं, मच्चित्तमपिनिर्मलम् । श्रेष्ठं देयञ्च भूयिष्ठं, तदेतत्रितयं मया ॥४१॥
अलभ्यत महापुण्यै-र्यौगपद्येन साम्प्रतम् । कृतकृत्यो भवाम्येत-द्दत्वैतस्मै महात्मने ॥ ४२ ॥
इति सङ्गमकश्चित्ते, विचिन्त्योत्थाय तत्क्षणात् । गृहीत्वा पायसस्थाल-मुपसाधु समागमत् ॥४३॥
अमन्दानन्दसन्दोहो—द्भिन्नरोमाञ्चकञ्चुकः । सोऽब्रवीद्भगवन्नेत-द्गृहाणेति प्रसद्य मे ॥४४॥
ज्ञात्वोल्लसत्परीणामं कामं सङ्गमकं मुनिः । स्वं पात्रं धारयामास, तस्यानुग्रहहेतवे ॥४५॥
सम्विभागं प्रयच्छेति, भाषमाणेऽपि सन्मुनौ । साधुपात्रे स चिक्षेप, परमान्नमशेषतः ॥४६॥
सम्यक्त्वाभावतो दान—प्रभावान्मानवेष्वसौ । बबन्धायुर्महाभोगं, सन्मध्यमगुणान्वितः ॥४७॥
नत्वा विसर्जितास्तेन, गत्वा स्थानं निजं मुनिः । विधिना विदधे तेन, पारणं सुसमाहितः ॥४८॥
धन्यंमन्यः स वत्सीयो, यथास्थानमुपाविशत् । अत्रान्तरे च धन्यापि, निरगान्मन्दिरान्तरात् ॥४९॥
रहितं परमान्नेन, विलोक्य सुतभाजनम् । मन्ये भुक्तमनेनेति, साक्षिपत्पायसं पुनः ॥५०॥
प्रागप्राप्तमिवाकण्ठ-मतृप्तः पायसं स तु । बुभुजे लौल्यतस्तुल्यं, लौल्यं हि निखिलाङ्गिनाम् ॥५१॥
भुक्त्वा सङ्गमकस्तूर्णं, वर्ण्यंवर्णांश्च तर्णकान् । आदाय बहिरागच्छ-त्तस्यैषा जीविका यतः ॥५२॥
तत्र चालोकयामास, तमेव मुनिपुङ्गवम् । कायोत्सर्गेण तिष्ठन्तं, निश्चलं शैलराजवत् ॥५३॥

बालभावेऽप्यतन्द्रालुर्दयालुस्तर्णकानसौ । सद्दूर्वाङ्कुरपूरायां, भूमौ नीत्वाऽमुक्ततः ॥ ५४ ॥
आजगाम मुनेः पादान्, सेवितुं पुनरेव सः । मानसस्याम्बुजान् पङ्क-प्रोज्झितान् कलहंसवत्॥ ५५ ॥
धन्योऽस्म्यस्य मुनेर्येन, प्रापि पादद्वयं मया । तृषितेनेव पान्थेन, मरौ सकमलं सरः ॥ ५६ ॥
इत्थमध्यवसायोऽस्य, ववृधे सुतरां शुभः । लभ्यानुसारतो भावो, जीवानां जायते यतः ॥ ५७ ॥
तत्रैव निश्यभूत्तस्या-जीर्णं वायुनिरोधतः । प्रायोऽत्याहारतः पुंसा-मजीर्णमुपजायते ॥ ५८ ॥
सस्मार मुनिमेवासौ, पीडितोऽपि तया रुजा । प्रायेणासन्नमोक्षाणां, विपद्यपि शुभं मनः ॥ ५९ ॥
स त्वं सङ्गमकश्चार्त-रौद्रध्यानविवर्जितः । शुभेनाध्यवसायेन, बाल एव विपद्य च ॥ ६० ॥
पुरे राजगृहेऽमुष्मिन्, गोभद्रश्रेष्ठिनो गृहे । पत्न्या भद्राभिधानायाः, पुत्रत्वेनोदपद्यथाः ॥६१॥युग्मं॥
सशोका विललापोच्चै-र्धन्या पुत्रवियोगतः । पत्यभावे हि नारीणां, सुतस्नेहो महत्तरः ॥ ६२ ॥
कियत्यपि गते काले, सा श्लथीभूतपुत्रशुक् । चकारेश्वरगेहेषु, गृहकर्म्माणि पूर्ववत् ॥ ६३ ॥
अतीव चतुरा शुद्ध-शीला सा कर्म कुर्वती । अत्यन्तं तोषयामास, स्वामिनीः सर्वसद्मनाम् ॥ ६४ ॥
कर्ममूल्यं ततस्तस्यै, ददुः समधिकं च ताः । स्तोकस्तोकेन चैधिष्ट, कालेन कियताऽपि सा ॥ ६५ ॥
वर्द्धमानं बभूवास्या, द्रव्यं गोक्रयणोचितम् । बिन्दुना-बिन्दुना हन्त, भ्रियते हि सरोवरः ॥ ६६ ॥
कुण्डोध्नीर्गाः समादाय, वित्तेन कियताऽपि हि । दुग्धदध्याज्यतक्राणि, तासां सा नगरादिषु ॥६७॥

नीत्वा विक्रीय विक्रीय, मूल्येन प्रतिवासरम् । पुण्योदयात्क्रमेणाथ, बभूव बहुगोधना ॥६८॥युग्मं॥
धन्या दधि समादाय, पुरेऽद्याद्य समाययौ । निर्यान्तं त्वां पुराद्दृष्ट्वा, दध्नैव प्रत्यलम्भयत् ॥ ६९ ॥
तन्मुने शालिभद्राद्य, यया तुभ्यं ददे दधि । जज्ञे सा सान्वया धन्या, माता ते पूर्वजन्मनः ॥ ७० ॥
भण्यमानं निजं चित्रं, चरित्रं चरमार्हता । शालिभद्रमुनिः श्रुत्वा, पूर्वां जातिं समस्मरत् ॥ ७१ ॥
प्रणम्य स्वामिनं शालिभद्रवाचंयमोऽब्रवीत् । यथात्थ त्वं जगन्नाथ, तत्तथैवेत्यसंशयम् ॥ ७२ ॥
जातिस्मरणतो यस्मा-दहमप्यात्मनो भवम् । प्राक्तनं संस्मराम्येष, श्रद्दधे भवतां वचः ॥ ७३ ॥
गत्वैकान्ते जिनेन्द्रेणा-नुज्ञातौ तावुभावपि । तेन दध्नैव शुद्धेन, चक्रतुः पारणं मुनी ॥ ७५ ॥
ततस्तावतिसंविग्नौ, श्रीजिनेन्द्रस्य सन्निधौ । आगत्यावोचतां भूयो, विनयेन विभुं मुनी ॥ ७६ ॥
यावदस्त्यावयोः किञ्चि-त्तपःक्षामाङ्गयोर्बलम् । प्रकुर्वोऽनशनं तावत्तवाज्ञा स्याद्यदि प्रभो ॥ ७७ ॥
सर्वज्ञोऽप्याचचक्षेऽथा-राधकत्वं विदंस्तयोः । युक्तं युष्मादृशां कर्तु-मेतन्मोक्षाभिलाषिणाम् ॥७८॥
ततोऽर्हतः समक्षं तौ, महर्षी सकलान्यपि । नत्वातिचारस्थानान्या-लोचयामासतुस्तराम् ॥ ७९ ॥
क्षमयामासतुः सर्वान्, श्रमणान् श्रमणीरपि । गतशल्यमनोवृत्ती, निवृत्तौ पापवृत्तितः ॥ ८० ॥
वैभारपर्वतस्यैक-देशे शुद्धशिलातलम् । निर्भीकैः स्थविरैर्युक्तौ, स्वाम्यादिष्टैः स्म गच्छतः ॥ ८१ ॥
निरीक्ष्य चक्षुषा पूर्व-मुभावपि महामुनी । रजोहरणमादाय, प्रमृज्य च शिलातलम् ॥ ८२ ॥

जीविते मरणे तुल्यौ, समौ च सुखदुःखयोः । पादपोपगमं नामा–नशनं श्रयतः स्म तौ॥८३॥युग्मं॥
स्नुषाप्रमुखलोकेन, वृता भद्रा तदागमत् । लक्ष्मीरिव जिनाधीशं, वन्दितुं सपरिच्छदा ॥ ८४ ॥
वन्दित्वा सपरीवारा, जिनेन्द्रं सपरिच्छदम् । मुनियुग्ममपश्यन्ती, पप्रच्छ श्रेष्ठिनी प्रभुम् ॥ ८५ ॥
कुत्र तौ भगवन् शालि–भद्रधन्यौ महामुनी । नायातौ हेतुना केन, भिक्षार्थं मम मन्दिरम् ॥ ८६ ॥
बभाषे श्रीमहावीर–स्तौ गतौ ते निकेतनम् । लक्षितौ न त्वया किन्तु, व्यग्रयाऽत्र समागमे ॥ ८७ ॥
त्वत्सूनोः शालिभद्रस्य, जननी पूर्वजन्मनः । ताभ्यां दधि ददौ धन्या, चक्रतुः पारणं च तौ ॥ ८८ ॥
साम्प्रतं तु महासत्त्वौ, गत्वा वैभारकन्दरे । द्वावपि प्रतिपेदाते–ऽनशनं मुनिसत्तमौ ॥ ८९ ॥
तदाऽऽकर्ण्याशु भद्रापि, श्रेष्ठिनी सस्नुषा ययौ । तत्रैवानशनं यत्र, प्रपेदाते तपस्विनौ ॥ ९० ॥
अत्रान्तरे जिनाधीश–वन्दनाहेतवे पुनः । आययौ श्रेणिको भूपः, क्रमो भक्तिमतां ह्ययम् ॥ ९१ ॥
वन्दित्वा स्वामिनं मुन्यो–र्ज्ञात्वा चामशनं नृपः । अन्वगाच्छ्रेष्ठिनीं भद्रां, वन्दनाहेतवे तयोः ॥९२॥
तत्र च श्रेष्ठिनी भद्रा, निश्चलाङ्गौ शिलातले । वाचंयमावपश्यत्ता–वश्मना निर्मिताविव ॥ ९३ ॥
वन्द्यमानावपि तया, न किञ्चिदपि जल्पतः । सर्वचेष्टापरित्यागः, पादपोपगमे यतः ॥ ९४ ॥
वीक्षमाणा तयोः कष्टं, स्मरन्ती च तयोः सुखम् । व्यञ्जयन्ती सुतस्नेहं, श्रेष्ठिनी सस्नुषापि हि॥९५॥
मुक्तकण्ठं रुरोदोच्चै, रोदयन्तीव सर्वतः । वैभाराद्रेः प्रतिध्वानै–र्गम्भीरा अपि कन्दराः ॥९६॥युग्मं॥

दुष्कराध्यवसायेन, तयोरत्यन्तपीडिता । विलापानिति सा कर्तु-मारेभे शोकविह्वला ॥ ९७ ॥
गृहमप्यागतौ वत्सौ, न ज्ञातौ मन्दभाग्यया । दृष्टौ मया न दृष्ट्यापि, युवां नैवाभिवन्दितौ ॥ ९८ ॥
स्थित्वा सुरकृते रम्ये, प्रासादे सप्तभूमिके । अरण्ये स्थास्यते वत्स, त्वया व्यालाकुले कथम्॥ ९९ ॥
द्वात्रिंशत्तूलिकासूच्चै-स्तथाऽसुप्था यथासुखम् । सुप्यते च कथं वत्स, कर्कशेऽस्मिन् शिलातले॥१००॥
कृत्वा विलेपनं वत्स, देवानीतैर्विलेपनैः । स्वेदपङ्कोऽधुना गात्रे, धार्यते दुःसहः कथम् ॥ १ ॥
आकर्ण्य काकलीगीतं, त्वं श्रुत्योरमृतं स्रवत् । वत्स घूकशिवारावान्, कथमाकर्णयिष्यसि ॥ २ ॥
आसीत्ते तादृशी भक्ति-र्मयि वत्साधुना तु माम् । विलापान्कुर्वतीमित्थं, न दृष्ट्याऽप्यवलोकसे॥ ३ ॥
अथ चैवंविधा एव, बान्धवेतरयोरपि । भवन्ति गतसङ्गत्वा-त्साधवस्तुल्यचेतसः ॥ ४ ॥
तथापि त्वं ममानन्दं, दृशोरुत्पादयिष्यसि । निजदर्शनमात्रेण, पुरेत्यासीन्मनोरथः ॥ ५ ॥
अनेन पुनरारम्भे-णाङ्गत्यागविधायिना । तं मे मनोरथं वत्स, साम्प्रतं भङ्क्तुमुद्यतः ॥ ६ ॥
करोषि यत्तपस्तत्र, नान्तरायं करोमि ते । कर्कशेयं शिला किन्तु, त्यक्त्वेमां तदितो भव ॥ ७ ॥
विलापान्कुर्वतीमेव-मादिकानवलोक्य ताम् । अस्थाने खिद्यते भद्रे, किं त्वयेत्यवदन्नृपः ॥ ८ ॥
यस्याः सुतोऽग्रहीद्दीक्षां, त्यक्त्वेन्द्रश्रीसमां श्रियम् । सा त्वं पुत्रवतीष्वेका, पताकां परमामगाः॥ ९ ॥
तत्त्ववेदी सुतस्तेऽसौ, महासत्त्वशिरोमणिः । शिश्राय स्वामिपादाब्जं, निःपङ्कं राजहंसवत्॥१०॥

सूनुस्तेऽसौ वीरशिष्याऽनुरूपं तप्यते तपः। तप्यते तु त्वया मुग्धे, मुधैव स्त्रीस्वभावतः ॥ ११ ॥
भद्रे धन्यौ कृतार्थौ ते, जामातृतनयाविमौ। आराध्यते यकाभ्यां तु-त्तमार्थ प्रतिपत्तितः ॥ १२ ॥
तथा पुरप्रवेशोऽद्या-तिसध्या वर्ततेऽधुना। तद्गम्यते समुत्तिष्ठ, नगरे निजवेश्मनि ॥ १३॥
इत्यादि मधुरालापैः, श्रेणिकः पृथिवीपतिः। सशोकां श्रेष्ठिनीं भद्रां, सवधूकामबूबुधत् ॥ १४ ॥
अभिवन्द्य ततो भद्रा, वाचंयमशिरोमणी। रुदितक्षीणकण्ठाऽगा-च्छिन्नमनस्का निजं गृहम् ॥ १५ ॥
भंम्भासारोऽपि तौ साधू, वन्दित्वा सपरिच्छदः। अर्हद्भक्तिपवित्रात्मा, प्रविवेश निजं गृहम्॥१६॥
तौ पुनः सम्यगाराध्या-नशनं सुसमाहितौ। धन्यश्च शालिभद्रश्च, मुनी पञ्चत्वमापतुः ॥ १७ ॥
अवबुध्यानयोः काल-गमनं स्थविरास्ततः। निर्वाणप्रत्ययं चक्रुः, कायोत्सर्गमभीरवः ॥ १८ ॥
पादमूले जिनेन्द्रस्य, ते समेत्य प्रणम्य च। निबद्धाञ्जलयो नम्र-मूर्द्धान इदमूचिरे ॥ १९ ॥
भगवन् भवतां शिष्यौ, तौ प्रकृत्यैव भद्रकौ। आराध्यानशनं सम्यक्कीर्त्तिशेषत्वमापताम् ॥ २० ॥
अथेन्द्रभूतिर्भगवान्, प्रथमो गणभृद्वरः। निजरूपपराभूता—नुत्तरस्वर्गनिर्जरः ॥ २१ ॥
समचतुरस्रं संस्था-नमुत्तमं धारयंश्चतुर्ज्ञानी। वज्रर्षभनाराचा-भिधानसंहननबलशाली ॥ २२ ॥
श्रीपृथ्वीवसुभूत्यङ्ग-जन्मा सप्तकरोच्छ्रयः। चारुचामीकरच्छायः, स्वर्णाद्रिरिव जङ्गमः ॥ २३ ॥

१ श्रेणिकः

अभ्युत्थायाभिवन्द्योच्चै-रर्हतोऽङ्घ्रिजलेरुहम् । गोत्रेण गौतमः श्रीमान्, योजिताञ्जलिसम्पुटः ॥२४॥
समस्तश्रुतपाथोधि-पारदृश्वा विद्वानपि । विनीतविनयोऽप्राक्षी-ज्जिनेन्द्रमविदन्निव पञ्चभिः कुलकम् ॥ २५ ॥
विनेयौ भवतां शालि-भद्र धन्यौ जगत्पते । चमत्कारकरीं त्यक्त्वा सम्पदं व्रतमाश्रितौ
षष्ठाष्टमादिकं भद्र-महाभद्रादिकं तथा । तप्येते स्मनिराशंसं, तपोऽप्यत्यन्तदुष्करम् ॥ २७ ॥
अधीत्यैकादशाङ्गानि, गीतार्थौ तु बभूवतुः । निष्कलङ्कं निरुद्विग्नौ, पालयामासतुर्व्रतम् ॥ २८ ॥
पादपोपगमं नाम, पर्य्यन्तेऽनशनं श्रितौ । प्रकृत्या भद्रको शील-कलितौ विनयान्वितौ ॥ २९ ॥
शुभेनाध्यवसायेन, पूरयित्वायुरात्मनः । उत्पेदाते जगन्नाथ, क्व कदा सेत्स्यतश्च तौ ॥ ३० ॥
ततः श्रीमान्महावीरः, प्रावृडम्भोधरध्वनिः । निजगादेन्द्रभूते मे, शिष्यौ मुनिगुणान्वितौ ॥ ३१ ॥
उपरिष्टात्सहस्रांशु-पीयूषांशुविमानयोः । ऊर्ध्वं मेरुगिरेरूर्ध्वं, कल्पद्वादशकादपि ॥ ३२ ॥
ग्रैवेयकसुरावासा-नतिक्रम्य नव क्रमात् । विष्कम्भायामतो लक्ष-योजनप्रमितेऽभितः ॥ ३३ ॥
वृत्ते सर्वार्थसिद्धाख्ये-ऽजघन्योत्कृष्टजीविते । एकद्वारे विमानेऽस्मि-न्ननुत्तरसुखासिके ॥ ३४ ॥
अहमिन्द्रौ त्रयस्त्रिंशत्सागरप्रमितायुषौ । त्रिदशौ समजायेतां, रत्निमानसिताङ्गकौ ॥ ३५ ॥

---

१ बद्धमुष्टिः हस्तो रत्निः, तत्प्रमाणं सित चोज्ज्वल मङ्गं ययोस्तौ

## प्रशस्तिः



।श्रीमद्गुर्जरभूमिभूषणमणौ श्रीपत्तने पत्तने, श्रीमद्दुर्लभराजराजपुरतो यश्चैत्यवासि द्विपान्। निर्लोठ्यागम-
हेतुयुक्तिनखरैर्वासं गृहस्थालये, साधूनां समतिष्ठपन्मुनिमृगाधीशोऽप्रधृष्यः परैः ॥ १ ॥

सूरिः स चान्द्रकुलमानसराजहंसः, श्रीमज्जिनेश्वर इति प्रथितः पृथिव्याम्।
जज्ञे लसच्चरणरागभृदिद्धशुद्ध-पक्षद्वयः शुभगतिं सुतरां दधानः ॥ २ ॥

तच्छिष्यो जिनचन्द्रसूरिरमृतज्योतिर्नवीनोऽभव-त्पद्मोद्भासनभृत् कलङ्कविकलो दोषोदयध्वंसनः
सुस्थैर्यो जडिमापहारचतुरः सच्चक्रमोदावहो, दूरीभूततमोवृतिर्नकुटिलो न व्योमसंस्थानकृत् ॥३॥

अन्योऽपि शिष्यतिलकोऽभयदेवसूरिः, श्रीमज्जिनेश्वरगुरोः श्रुतकेतुरासीत्।
पञ्चाशकाष्टकनवाङ्गमनोज्ञटीका-कारः सुचारुधिषणः सुमनः प्रपूज्यः ॥ ४ ॥

आकर्ण्याभयदेवसूरिसुगुरोः सिद्धान्ततत्त्वामृतं, येनाज्ञायि न संगतो जिनगृहे वासो यतीनामिति।
तं त्यक्त्वा गृहमेधिगेहवसतिर्निर्दूषणा शिश्रिये, सूरिः श्रीजिनवल्लभोऽभवदसौ विख्यातकीर्तिस्ततः॥५

१ 'नामान्तं चक्र' इति प्रत्यन्तरम्. २ चरणं चारित्रं, पादश्च.

आयुः सुखेन परिपूर्य समग्रमस्मा–च्च्युत्वा विदेहविजये सुकुले समृद्धे ।
जन्माऽऽप्य सर्वविरतिं प्रतिपाल्य सम्य–गासाद्य केवलमलं शिवमाप्स्यतस्तौ ॥ ३६ ॥
ज्ञात्वैवं निर्निदानप्रतिवितरणतः सच्चमत्कारकारि–श्रीसम्प्राप्तिं नरत्वेऽनुपमसुररमा सङ्गमं स्वर्गलोके ।
सर्वोपाधिप्रमुक्तातुलममृतसुखं चेभ्यगोभद्रसून्वोः, पात्रेभ्यो दत्त दानं ननु सकलशिवान्याप्तुमिष्टानि चश्चेत् ॥ ३७ ॥
नम्यं पूज्यमनेकनिर्मलयशःशीलं सुरेन्द्रस्तुतं, सद्वर्णदृगुणदं जिनं कलरवं दुःकृच्छ्रभङ्गप्रदम् ।
मित्रं भव्यतमस्तमिस्रलवने शान्तं सुपाणिं ध्रुवं, वन्देऽमानमहिंसकं श्रमिगदातङ्कच्छिदं सुस्तवम् ॥३८॥

इति श्रीधन्यशालिभद्रमहर्षिचरिते शालिभद्रपूर्वजन्मभणनादिधन्यशालिभद्रसर्वार्थसिद्धिगमनमहाविदेहविजयभाविमुक्तिप्राप्तिफलप्रतिपादनपर्यन्तव्यावर्णनो नाम षष्ठः परिच्छेदः । समाप्तं चेदं धन्यशालिभद्रमुनिपुङ्गवयोश्चरित्रमिति ॥ अनुष्टुभां १४६० ॥

---

१ निदानरहितमुनिदानत.. २ मोक्षसुखम्. ३ भव्यलोका ज्ञानरूपान्धकारदलने मित्रं सूर्यसमानम्

भास्वांस्ततः समुदगाज्जिनदत्तसूरि–र्भव्यारविन्दचयबोधविधानदक्षः ।
गावः स्फुरन्ति विधिमार्गविकासनैक–तानास्तमोविदलनप्रवणा यदीयाः ॥६॥
बाल्ये श्रीजिनदत्तसूरिविभुभिर्ये दीक्षिताः शिक्षिता, दत्त्वाचार्यपदं स्वयं निजपदे तैरेव संस्थापिताः ।
ते श्रीमज्जिनचन्द्रसूरिगुरवोऽपूर्वेन्दुबिम्बोपमा, न ग्रस्ता तमसा कलङ्कविकलाः क्षोणौ बभूवुस्ततः ॥ ७ ॥
यैर्वादीन्द्रकरीन्द्रदर्पदलने सिंहैरिव स्फूर्जितं, मोहध्वान्तविनाशने भुवि सदा सूर्यैरिवोज्जृम्भितम् ।
भव्यप्राणिसमूहकैरववने चन्द्रैरिवेहोद्गतं । ते श्रीमज्जिनपत्यभिख्यगुरवोऽभूवन् यतीशोत्तमाः ॥ ८ ॥
तेषु स्वर्गाधिरूढेष्वहह बहुगुणस्तद्विनेयावतंसः, साधुर्वीरप्रभाख्यः सकलगणधुराधुर्यवर्योर्जितश्रीः
आचार्यैः सर्वदेवैर्विहितगुरपदोऽधिष्ठितस्तन्महिम्ना, नामानं लम्भितः श्रीवसतिनिवसतिस्थापनाचुञ्चुसूरेः ॥ ९ ॥
श्रीचन्द्रगच्छमभिनन्दति शास्ति पाति, तीर्थं प्रभावयति सम्प्रति जैनचन्द्रम् ।
यः श्रीजिनेश्वर इवाप्रतिमैर्वचोभि–र्वृत्तैरिव त्रिभुवनं पृणति प्रतीतः ॥ १० ॥
तदाज्ञया सद्गुणसर्वदेवा–चार्यैः समं जैसलमेरुदुर्गे । स्थितो गिरैषां स्वपरोपकारहेतोः समाधिं मनसोऽभिलष्यन्॥११॥
शर वसु रविसङ्ख्ये (१२८५) वैक्रमे वत्सरेऽस्मिन्, घहति तपसि मासे शुक्लपक्षे दशम्यांम् ।
जिनपतिगुरुशिष्यः पूर्णभद्राभिधानो गणिरकृत चरित्रं धन्यगोभद्रसून्वोः ॥ १२ ॥

चरितमिदमखिलनिर्मल–विद्याकूपारपारदृश्वानः । वाचकमुख्याः सूरप्रभाभिधाः शोधयाञ्चक्रुः॥१३॥
धन्यसाधुमुनिशालिभद्रयोः, प्रीतिकारि चरितं विधाययत् । पुण्यमत्र समुपार्जितं मया, स्यात्ततो जगदिदं सुखास्पदम्॥
गगनसरसि यावन्निर्मले शारदेन्दुः, कलयति कलहंसस्फारलीलातिरेकम् ।
जगति जयति (तु) तावत्पठ्यमानं सुधीभिः, सुचरितमिदमुच्चैर्धन्यगोभद्रसून्वोः ॥ १९ ॥

(१४९०)

। इति ग्रन्थकारप्रशस्तिः ।

॥ इति श्रीधन्यशालिभद्रचरितं समाप्तम् ॥

